श्री दिव्य गुरु प्रणाम मंत्र

ॐ यद् ब्रह्मशुद्धं निरहं निरीहं स्वार्न्तविलीनात्मकसमस्तशक्तिः ।
सच्चित्सुखं चैकमनन्तपारं त्वमादिनाथं गुरु मानताः स्मः ॥१॥

जो शुद्ध निरहंकार, आत्मकाम हैं, जिनके अभ्यन्तर में समस्त शक्ति विलीन रहती है, वे अनन्त अपार सच्चिदानन्दादिनाथं नामक परमात्मा हमारे प्रथम दिव्य गुरु हैं। हम उन्हें प्रणाम करते हैं।

यास्ताद्विलीनामितशक्रयः स्युस्तपिजी ब्रह्मण आद्यभिन्ना ।
निद्रान्त आद्येव नरस्य वृत्तिर्नताः स्मरतां शक्तिगुरुं द्वितीयम् ॥२॥

परब्रह्म से अभिन्न आद्याशक्ति, जो विलीन होकर आदिनाथ नामक परब्रह्म में सुप्रस्थित पुरुष में वृत्तिवत् अवस्थित है, वही हमारी द्वितीय दिव्यगुरु हैं। हम उन्हें प्रणाम करते हैं।

त्वया विशिष्टस्तु स आदिनार्थोनिराकृति निर्गुण उच्चतेऽसौ ।
वृत्यन्यगोऽनुग्रहवास्तृतीयं सदाशिवं तं गुरुमानताः स्मः ॥३॥

वही शक्ति विशिष्ट आदिनाथ निर्गुण एवं निराकार होकर भी निविृक्तिक योगी की प्रज्ञा में अनुग्रहवश आरूढ़ होकर रहते हैं, वे सदाशिव हमारे तृतीय गुरु हैं। हम उन्हें प्रणाम करते हैं।

तदुत्थिता या स्वतः एव वृत्तिः श्रुत्यास नैकोरमेत त्वितीडिया ।
तां शुद्धविद्यां च सदाशिवीयां शक्तिं चतुर्थं गुरुमानताः स्मः॥४॥

सदाशिव द्वितीय के बिना अकेले प्रकाशित नहीं हो सकते, अतएव जिस शुद्धविद्या शक्तिरूप वृक्ति का आश्रय लेते हैं, वही शुद्धविद्या हमारी चतुर्थ दिव्यगुरु हैं। हम उन्हें प्रणाम करते हैं।

तद्वानुरूपः सगुणः सजातस्त्वादपाणिः श्रुतिवाक्प्रसिद्धः ।
तिरोहितं तिष्ठति विश्वमस्मिन् तमीश्वरं पञ्चममानताः स्मः ॥५॥

वही शक्तिरूप आकाररहित सदाशिव जब सगुणात्मक ईश्वररूप धारण करते हैं, तब श्रुति में चरणहीन होने पर वेदगामी नयनहीन होने पर भी दृष्टिमान एवं कर्णहीन होने पर भी श्रवणशील कहा गया है। वही ईश्वर हमारे पंचम श्रवणशील कहा गया है। वही ईश्वर हमारे पंचम दिव्यगुरु हैं। हम उन्हें प्रणाम करते हैं।

द्वितीयमेच्छत् श्रुतिवर्णिता या तदवृत्तिरस्मान महदादिगर्भम ।
धतेऽन्तरे तां वयमीश्वरस्य य शक्तिं तु षष्ठ गुरुमानताः स्मः॥६॥



लीला के लिए द्वैतभाव ग्रहण करा हैं - ऐसा कहकर श्रुति जिन्हें ईच्छामय वर्णित करती है, उन ईच्छामय की जो ईच्छाशक्तिरूप वृक्ति महदादिनिधान, वही शक्ति हमारी षष्ठ दिव्य गुरु हैं। हम उन्हें प्रणाम करते हैं।

तद्युग्गुणाढ्याकृतिमान स या ते रूद्रेति वेदोक्तवचः प्रसिद्धः ।
लयीकृतं तिष्ठति विश्वमस्मिंस्तं सप्तमं रुद्रगुरुं नताः स्मः ॥७॥

महदादिहनिधानशक्तियुक्त जो ईश्वर गुण बहुल होकर स्वयं में समस्य वि क्षेग धारण करे हैं, जो यजुर्वेद रुद्री में रुद्र नाम से प्रसिद्ध हैं, वे रुद्र हमारे सप्तम गुरु हैं। हम उन्हें प्रणाम करते हैं।

अहं बहुस्यामिति या तथुत्था वृत्तिर्जनित्री महदादिकानाम् ।
पृथग्-पृथक्-कृत्य च रुद्रशक्ति तमष्टमं स्वीयगुरुं नताः स्मः ॥८॥

एक से बहुत होने के अभिप्राय से धृतवेग रुद्र होकर वृत्तिरूपा जो शक्ति अर्न्तनिरहित तत्वसमूह को पृथक करने के लिए महदादि की जननी हुई, वे हमारी अष्टम् गुरु हैं। हम उन्हें प्रणाम करते हैं।

व्याप्नोति तद्युक् स महन्मुखेषुतत्त्वेषु तेजस्त्वखिलंस्वकीयम् ।
निधाय तत्स्थं परिपाति विश्वं विष्णुं गुरुं तं नवमं नताः स्मः ॥९॥

पुष्णाम्यहं विश्वमिदं स्वकीयंमदीयशक्तयेति मदीयवृत्तिः ।
पुष्णामि तत्त्वान्तरंगं तु विश्वं तां विष्णुशक्तिं दशमं नताः स्मः ॥१०॥

संस्पृष्ट एवं विविक्त होने की वृत्ति का अवलम्बन कर महदादे तत्व जिसका स्वकीय समग्र तेज पालने के लिए निहित रहते हैं, वे हमारे नवम् दिव्यगुरु विष्णु हैं। हम सब उन्हें प्रणाम करते हैं।

तत्वान्तरस्थं जगदित्थमन्तः पश्यन् स्ववृत्तया स विराऽबभूव ।
समष्टिजीवोऽखिलसृड्विधाता गुरुंत्वमेकादशमानताः स्मः ॥११॥

तत्वान्तर में जगत परिणत होगा ऐसा देखकर जो अपनी वृत्ति से हिरण्यगर्भ में विरीट हुए थे, जिनकी उसी मूर्ति से अखिल चराचर विभिक्त हुआ है, वही हमारे एकादश गुरु हैं। हम उन्हें प्रणाम करते हैं।

यज्ञादिकं चात्मभवाः सुखाद्यये कुर्वन्तु जीवा इति यास्य वृक्ति ।
वेदत्रयी कर्ममयी किलाजशक्ति गुरुं द्वादशमानताः स्मः ॥१२॥

किल-निस्संदेह अज-अजन्मा जीव के भीतर स्वयं के सुख के लिए यज्ञादिक उपासना करने की वृत्ति, जो वेदत्रयी कर्ममयी सावित्री के नाम से प्रसिद्ध है, वे हमारी द्वादश गुरु हैं। हम उन्हें प्रणाम करते हैं।

### श्री गुरुपादुकार्चनम

॥ अथ ध्यानम् ॥

हंसाभ्यां परिवृत्तपत्रकमलैर्दिव्यैर्जगत्कारणै-
र्विश्वोत्कीर्णमनेकदेहनिलयैः स्वच्छंदमात्मेच्छया ॥
तद्योतं पदशांभवं तु चरणं दीपाङ्कुर ग्राहिणम् ।
प्रत्यक्षाक्षरविग्रहं गुरुपदं ध्यायेद्विभुं शाश्वतम् ॥

नमो गुरुभ्यो गुरुपादुकाभ्यो नमः परेभ्यः परपादुकाभ्यः ।
आचार्य सिद्धेश्वर पादुकाभ्यो नमो नमः श्री गुरुपादुकाभ्यः ॥
ऐङ्कार ह्रङ्कार रहस्य युक्त श्रीङ्कार गूढार्थमहाविभूत्या ॥
ओङ्कार मर्म प्रतिपादिनीभ्यां नमो नमः श्री गुरुपादुकाभ्याम् ॥
होत्राग्नि हौत्राग्नि हविष्यहोत्र होमादि सर्वाकृति भासमानाम् ।
यद् ब्रह्म तद्बोध वितारिणीभ्यां नमो नमः श्री गुरुपादुकाभ्याम् ॥
कामादि सर्पव्रज गारुडाभ्यां विवेक वैराग्य निधि प्रदाभ्याम् ।
बोध प्रदाभ्यां द्रुतमोक्षदाभ्यां नमो नमः श्री गुरुपादुकाभ्याम् ॥
अनन्त संसार समुद्र तार  नौकायिताभ्यां स्थिरभक्तिदाभ्याम् ।
जाड्याब्धि संशोषण वाडवाभ्यां नमो नमः श्री गुरुपादुकाभ्याम् ॥
गुकारस्त्वन्धकारश्च रुकारस्तेज उच्यते ।
अज्ञान ग्रासकं ब्रह्म गुरुरेव न संशयः ॥
गुकारः प्रथमो वर्णो मायादि गुण भासकः ।
रुकारो द्वितीयो ब्रह्म माया भ्रान्ति विनाशनम् ॥
संसारवृक्षमारूढाः पतन्तो नरकार्णवे ।
येन चैवोद्धृताः सर्वे तस्मै श्री गुरवे नमः ॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुरेव परब्रह्म तस्मै श्री गुरवे नमः ॥
हेतवे जगतामेव संसारार्णव सेतवे ।
प्रभवे सर्व विद्यानां शम्भवे गुरवे नमः ॥
अज्ञानतिमिरान्धस्य ज्ञानाञ्जन शलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्री गुरवे नमः ॥
त्वं पिता त्वं च मे माता त्वं बन्धुस्त्वं च देवता ।
संसार प्रतिबोधार्थं तस्मै श्रीगुरवे नमः ॥



यत्सत्येन जगत्सत्यं यत्प्रकाशेन भाति तत् ।
यदानन्देन नन्दन्ति तस्मै श्री गुरवे नमः ॥
यस्य स्थित्या सत्यमिदं यद्भाति भानुरूपतः ।
प्रियं पुत्रदी यत्प्रीत्या तस्मै श्री गुरवे नमः ॥
येन चेतयते हीदं चित्तं चेतयते न यम् ।
जाग्रत् स्वप्न सुषुप्त्यादि तस्मै श्री गुरवे नमः ॥
यस्य ज्ञानादिदं विश्वं न दृश्यं भिन्नभेदतः ।
सदेकरूपरूपाय तस्मै श्री गुरवे नमः ॥
यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
अनन्य भाव भावाय तस्मै श्री गुरवे नमः ॥
यस्य कारणरूपस्य कार्य रूपेण भाति यत् ।
कार्य कारण रूपाय तस्मै श्री गुरवे नमः ॥
नानारूपं इदं सर्वं न केनाप्यस्ति भिन्नता ।
कार्य कारणता चैव तस्मै श्री गुरवे नमः ॥
गुकारं च गुणातीतं रुकारं रूपवर्जितम् ।
गुणातीतस्वरूपं च यो दद्यात्स गुरुः स्मृतः ॥
अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥
सर्व श्रुति शिरोरत्न विराजित पदांबुजः ।
वेदान्तांबुज सूर्यो यस्तस्मै श्रीगुरवे नमः ॥
यस्य स्मरणमात्रेण ज्ञानमुत्पद्यते स्वयम् ।
य एव सर्व संप्राप्तिस्तस्मै श्रीगुरवे नमः ॥
चैतन्यं शाश्वतं शान्तं व्योमातीतं निरञ्जनम् ।
नाद बिन्दु कलातीतं तस्मै श्रीगुरवे नमः ॥
स्थावरं जङ्गमं चैव तथा चैव चराचरम् ।
व्याप्तं येन जगत्सर्वं तस्मै श्रीगुरवे नमः ॥
ज्ञान शक्ति समारूढस्तत्त्वमाला विभूषितः ।
भुक्तिमुक्तिप्रदाता यस्तस्मै श्रीगुरवे नमः ॥
अनेकजन्मसंप्राप्त सर्वकर्मविदाहिने ।
स्वात्मज्ञानप्रभावेण तस्मै श्रीगुरवे नमः ॥
न गुरोरधिकं तत्त्वं न गुरोरधिकं तपः ।
तत्त्वं ज्ञानात्परं नास्ति तस्मै श्रीगुरवे नमः ॥
ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरोः पदम् ।
मन्त्रमूलं गुरोर्वाक्यं तस्मै श्रीगुरवे नमः ॥
गुरुरादिरनादिश्च गुरुः परम दैवतम् ।

गुरोः परतरं नास्ति तस्मै श्रीगुरवे नमः ॥

श्रीमत्परब्रह्म गुरुं स्मरामि श्रीमत्परब्रह्म गुरुं वदामि ।
श्रीमत्परब्रह्म गुरुं नमामि श्रीमत्परब्रह्म गुरुं भजामि ॥
ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिम् ।
द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ।
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतम्
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥
नित्यं शुद्धं निराभासं निराकारं निरञ्जनम् ।
नित्यबोधं चिदानन्दं गुरुं ब्रह्म नमाम्यहम् ॥

हृदंबुजे कर्णिकमध्यसंस्थे सिंहासने संस्थितदिव्यमूर्तिम् ।
ध्यायेद्गुरुं चन्द्रकलाप्रकाशम् चित्पुस्तकाभीष्टवरं दधानम् ॥
श्वेतांबरं श्वेतविलेपपुष्पं मुक्ताविभूषं मुदितं द्विनेत्रम् ।
वामांकपीठस्थितदिव्यशक्तिं मंदस्मितं सांद्रकृपानिधानम् ॥
आनंदमानंदकरं प्रसन्नं ज्ञानस्वरूपं निजबोधयुक्तम ।
योगींद्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं नमामि ॥
न गुरोरधिकं न गुरोरधिकं न गुरोरधिकं न गुरोरधिकम् ।
शिवशासनतः शिवशासनतः शिवशासनतः शिवशासनतः ॥
इदमेव शिवं त्विदमेव शिवं त्विदमेव शिवं त्विदमेव शिवम् ।
मम शासनतो मम शासनतो मम शासनतो मम शासनतः ॥
वंदेऽहं सच्चिदानंदं भेदातीतं सदा गुरुम् ।
नित्यं पूर्णं निराकारं निर्गुणं स्वात्मसंस्थिकम् ॥
परात्परतरं ध्येयं नित्यमानंदकारकम् ।
हृदयाकाशमध्यस्थं शुद्धस्फटिकसन्निभम् ॥
स्फटिकप्रतिमारूपं दृश्यते दर्पणे यथा ।
तथात्मनि चिदाकारमानंदं सोऽहमित्युत ॥
एको देव एक धर्म एकनिष्ठा परंतपः ।
गुरोः परतरं नान्यन्नास्ति तत्त्वं गुरोः परम् ॥



## गणपति अथर्व शीर्षम्

ॐ नमस्ते गणपतये । त्वमेव प्रत्यक्षं तत्त्वमसि । त्वमेव केवलं कर्तासि त्वमेव केवलं धर्तासि, त्वमेव केवलं हर्तासि त्वमेव सर्वं खल्विदं ब्रह्मासि । त्वं साक्षादात्मासि नित्यम् । ऋतं वच्मि सत्यं वच्मि । अब त्वं माम् । अव वक्तारम्, अब श्रोतारम् । अव दातारम् । अव धातारम् । अव अनूचानम् । अव शिष्यम् । अव पुरस्तात् । अव पश्चातात् । अव उत्तरात्तात्। अव दक्षिणात्तात । अव चोर्ध्वात्तात् । अवाधरात्तात् । सर्वतो मां पाहि पाहि समन्तात् । त्वं वाङ्मयस्त्वं चिन्मयः त्वमानन्दमयस्त्वं ब्रह्ममयः त्वं सच्चिदानन्दाद्वितीयोसि । त्वं प्रत्यक्षं ब्रह्मासि । त्वं ज्ञानमयो विज्ञानमयोसि । सर्वं जगदिदं त्वत्तोजायते। सर्वं जगदिदं त्वत्तस्तिष्ठति तिष्ठति । सर्वं जगदिदं त्वयि लयमेष्यति । सर्वं जगदिदं त्वयि प्रत्येति । त्वं भूमिरापोऽनलोऽनिलोनभः। त्वं चत्वारि वाक्पदानि । त्वं गुणत्रयातीतः त्वं देहत्रयातीतः त्वं अवस्थात्रयातीतः त्वं कालत्रयातीतः । त्वं मूलाधारस्थितोऽसि नित्यम् । त्वं शक्तित्रयात्मकः । त्वां योगिनो ध्यायन्ति नित्यम्।त्वं ब्रह्मास्त्वंविष्णुस्त्वंरूद्रस्त्वमिन्द्रस्त्वमग्निस्त्वंवायुस्त्वं - सूर्यस्त्वंचन्द्रमास्त्वंब्रह्मभूर्भुवः स्वरोम् ।

(ओं गं गणपतये नमः) गणादिं पूर्वमुच्चार्य वर्णादिंस्तदनन्तरम्, अनुस्वारः परतरः अर्धेन्दु लसितम्, तारेण रूद्धम् एतत्तव मनुस्वरूपम् । गकारः पूर्वरूपम् अकारो मध्यम रूपम्, अनुस्वारश्चान्त्यरूपम् । बिन्दुरूत्तररूपम् अनुस्वारश्चान्त्यरूपम्, बिन्दुरूत्तररूपम्, नादः संधानम् संहिता संधिः सैषा गणेशविद्या । गणकऋषिः निचृद्गायत्री छन्दः गणपतिर्देवता ।

एकदन्ताय विद्महे, वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयात् ।

एकदन्तं चतुर्हस्तं पाशमंकुश धारिणम् रदं च वरदं हस्तैर्विभ्राणं मूषकध्वजम् । रक्तं लम्बोदरं शूर्पकर्णकं रक्तवासमम् रक्तगंधानुलिप्ता रक्तपुष्पैः सुपूजितम् ।भक्तानुकम्पिनं देवं जगत्कारणमच्युतम् आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् । एवं ध्यायति यो नित्यं स योगी योगिनां वरः ॥

नमो व्रातपतये, नमो गणपतये, नमः प्रमथपतये, नमस्ते अस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय श्रीवरदमूर्तये नमः।

एतदथर्वशीर्षयोऽधीते सःब्रह्मभूयाय कल्पते । स सर्वविघ्नैर्न बाध्यते । स सर्वतः सुखमेधते । स पंचमहापापात् प्रमुच्यते । सायमधीयानो दिवसकृतं पापं नाशयति, प्रातरधीयानो रात्रिकृतं पापं नाशयति, सायं प्रातः प्रयुञ्जानो अपापो भवति। सर्वत्राधीयानः अपविघ्नो भवति । धर्मार्थकाममोक्षं च विन्दति । इदमथर्वशीर्षं अशिष्याय न देयम् । यो यदि मोहात् दास्यति स पापीयान् भवति । सहस्त्रवर्तनात् यं यं काममधीते तं तमनेन साधयेत् । अनेन गणपतिमभिषिंचति स वाग्मी भवति । चतुर्थ्यामनश्नन् जपति स विद्यावान् भवति । इत्यथर्व वाक्यम् । ब्रह्माद्यावरणं विद्यात् न विभेति कदाचन । यो दूर्वांकुरैर्यजति सः वैश्रवणोपमो भवति । यो लाजैर्यजति स यशोवान् भवति, स मेधावान् भवति । यो मोदकसहस्त्रेण यजति स वांछित फलमवाप्नोति । यः साज्य समिद्‌भिर्यजति सः सर्वं लभते, सः सर्वं लभते ग्राहयित्वा सूर्यवर्चस्वी भवति । सूर्यग्रहे महानद्यां प्रतिमासन्निधौ वा जप्त्वा सिद्धमंत्रो भवति । महाविघ्नात्प्रमुच्यते, महादोषात्प्रमुच्यते, महाप्रत्यवायात्प्रमुच्यते । स सर्वविद् भवति, स सर्वविद् भवति । य एवं वेद इत्युपनिषत् । ओम् शान्तिः शान्तिः शान्तिः ।

卐 卐 卐 卐 卐

### श्रीगणपतिस्तोत्रम्

जेतुं यस्त्रिपुरं हरेणहरिणाव्याजाद्बलिं बध्नता
स्त्रष्टुं वारिभवोद्भवेनभुवनं शेषेण धर्तुंधराम् ।
पार्वत्यामहिषासुरप्रमथनेसिद्धाधिपैःसिद्धये
ध्यातःपञ्चशरेणविश्वजितयेपायात्सनागाननः॥१॥
विघ्नध्वान्तनिवारणैकतरणिर्विघ्नाटवीहव्यवाड
्विघ्नव्यालकुलाभिमानगरुडोविघ्नेभपञ्चाननः।
विघ्नोत्तुङ्गगिरिप्रभेदनपविर्विघ्नाम्बुधेर्वाडवो
विघ्नाघौघघनप्रचण्डपवनो विघ्नेश्वरःपातुनः ॥२॥
खर्वं स्थूलतनुं गजेन्द्रवदनं लम्बोदरं सुन्दरं
प्रस्यन्दन्मदगन्धलुब्धमधुपव्यालोलगण्डस्थलम् ।
दन्ताघातविदारितारिरुधिरैःसिन्दूरशोभाकरं
वन्देशैलसुतासुतं गणपतिंसिद्धिप्रदंकामदम् ॥३॥
गजाननाय महसे प्रत्यूहतिमिरच्छिदे ।
अपारकरुणापूरतरङ्गितदृशे नमः ॥४॥
अगजाननपद्मार्कं गजाननमहर्निशम् ।
अनेकदन्तं भक्तानामेकदन्तमुपास्महे ॥५॥
श्वेताङ्गंश्वेतवस्त्रंसितकुसुमगणैःपूजितंश्वेतगन्धैः
क्षीराब्धौरत्नदीपैःसुरनरतिलकं रत्नसिंहासनस्थनम् ।
दोर्भिः पाशाङ्कुशाब्जाभयवरमनसं चन्द्रमौलिं त्रिनेत्रं
ध्यायेच्छान्त्यर्थमीशं गणपतिममलं श्रीसमेतं प्रसन्नम् ॥६॥
आवाहये तं गणराजदेवं रक्तोत्पलाभासमशेषवन्द्यम् ।
विघ्नान्तकं विघ्नहरं गणेशं भजामि रौद्रं सहितं च सिद्धया ॥७॥
यं ब्रह्म वेदान्तविदो वदन्ति परं प्रधानं पुरुषं तथान्ये ।
विश्वोद्ग तेः कारणमीश्वरं वा तस्मै नमो विघ्नविनाशनाय ॥८॥
विघ्नेश वीर्याणि विचित्रकाणि वन्दीजनैर्मागधकैः स्मृतानि ।
श्रुत्वा समुत्तिष्ठ गजानन त्वं ब्राह्मे जगन्मङ्गलकं कुरुष्व ॥९॥
गणेश हेरम्ब गजाननेति महोदर स्वानुभवप्रकाशिन् ।
वरिष्ठ सिद्धिप्रिय बुद्धिनाथ वदन्त एवं त्यजत प्रभीतीः ॥१०॥
अनेकविघ्नान्तक वक्रतुण्ड स्वसंज्ञवासिंश्च चतुर्भुजेति ।
कवीश देवानतकनाशकारिन् वदन्त एवं त्यजत प्रभीतीः ॥११॥
अनन्तचिद्रूपमयं गणेशं ह्यभेदभेदादिविहीनमाद्यम् ।
हृदि प्रकाशस्य धरं स्वधीस्थं तमेकदन्तं शरणं व्रजामः ॥१२॥
विश्वादिभूतं हृदि योगिनां वै प्रत्यक्षरूपेण विभान्तमेकम् ।
सदा निरालम्बसमाधिगम्यं तमेकदन्तं शरणं व्रजामः ॥१३॥
यदीयवीर्येण समर्थभूता माया तया संरचितं च विश्वम् ।
नागात्मकं ह्यात्मतया प्रतीतं तमेकदन्तं शरणं व्रजामः ॥१४॥
सर्वान्तरे संस्थितमेकगूढं यदाज्ञया सर्वमिदं विभाति ।

अनन्तरूपं हृदि बोधकं वै तमेकदन्तं शरणं व्रजामः ॥१५॥
यं योगिनो योगबलेन साध्यं कुर्वन्ति तं कः स्तवनेन नौति ।
अतः प्रणामेन सुसिद्धिदोऽस्तु तमेकदन्तं शरणं व्रजामः ॥१६॥
देवेन्द्रमौलिमन्दारमकरन्दकणारुणाः ।
विघ्नान् हरन्तु हेराम्बचरणाम्बुजरेणवः ॥१७॥
एकदन्तं महाकायं लम्बोदरगजाननम् ।
विघ्ननाशकरं देवं हरेम्बं प्रणामाम्यहम् ॥१८॥
यदक्षरं पदं भ्रष्टं मात्राहीनं च यद्भवेत् ।
तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर ॥१९॥

卐 卐 卐 卐 卐

## सङ्कटनाशनगणेशस्तोत्रम्

प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् ।
भक्तावासं स्मरेन्नित्यमायुःकामार्थसिद्धये ॥१॥
प्रथमं वक्रतुण्डं च एकदन्तं द्वितीयकम् ।
तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् ॥२॥
लम्बोदरं प श्चमं च षष्ठं विकटमेव च ।
सप्तमं विघ्नराजं च धूम्रवर्णं तथाष्टमम् ॥३॥
नवमं भालचन्द्रं च दशमं तु विनायकम् ।
एकादशं गणपतिं द्वादशं तु गजाननम् ॥४॥
द्वादशैतानि नामानि त्रिसन्ध्यं यः पठेन्नरः ।
न च विघ्नभयं तस्य सर्वसिद्धिकरं प्रभो ॥५॥
विद्यार्थी लभते वद्यां धनार्थी लभते ानम् ।
पुत्रार्थी लभतेपुत्रान्मोक्षार्थी लभते गतिम् ॥६॥
जपेद्ग णपतिस्तोत्रं षड्भिर्मासैः फलंलभेत् ।
संवत्सरेण सिद्धिं च लभते नात्र संशयः ॥७॥
अष्टभ्यो ब्राह्मणेभ्यश्च लिखित्वा यःसमर्पयेत् ।
तस्यविद्याभवेत्सर्वा गणेशस्य प्रसादतः ॥८॥
इति श्रीनारदपुराणे सङ्कटनाशनगणेशस्तोत्रं सम्पूर्णम् ।



## गणपति स्तवन

ओंकारमाद्यं प्रवदन्ति सन्तोवाचः श्रुतीनामपि यं गृणन्ति।
गजाननं देवगणानतांघ्रि भजेऽहमर्धेन्दु कृतावतंसम्॥
पादारविन्दार्चनतत्पराणाम् संसारदावानलभंगदक्षम् ।
निरन्तरं निर्गतदानतोयैस्तं नौमि विघ्नेश्वरमम्बुदाभम्॥
कृतांगरागं नवकुंकुमेन मत्तालिजालं मदपंकलग्नाम्।
निवारयन्तं निजकर्णतालैः को विस्मरेत्पुत्रमनंगशत्रोः॥
शंभोर्जटाजूट निवासिगंगाजलं समानीय कराम्बुजेन।
लीलाभिराराच्छिवमर्चन्तं गजाननं भक्तियुताः भजन्ति॥
कुमारमुक्तौ पुनरात्महेतोः पयोधरौ पवर्तराजपुत्र्याः।
प्रक्षालयन्तं करशीकरेण मौग्ध्येन तं नागमुखं भजामि॥
त्वया समुद्भूतगजास्य हस्ताद्ये शीकराः पुष्कररंध्रमुक्ताः।
व्योमांगणेते विचरन्ति ताराः कालात्मना मौक्तिकतुल्यभास॥
क्रीडारते वारिनिधौ गजास्ये वेलामतिक्रामति वारिपूरे।
कल्पावसानं परिचिन्त्यदेवाः कैलासनाथं श्रुतिभिः स्तुवन्ति॥
नागनानने नागकृतोत्तरीये क्रीडरते देवकुमारसंघै।
त्वयि क्षणं कालगतिं विहाय तौ प्रापतुः कन्दुकतामिनेन्दू॥
मदोल्लसत्पंचमुखैरजस्त्रम् अध्यापयन्तं समलागमार्थम्।
देवान् ऋषीन् भक्तजनैकमित्रं हेरम्बमर्क्कारूणमाश्रयामि॥
पादाम्बुजाभ्यामतिवामनाभ्याम् कृतार्थयन्तं कृपया धरित्रीम्।
अकारणं कारणमाप्तवाचां तं नागवक्त्रं न जहाति चेतः॥
येनार्पितं सत्यवतीसुताय पुराणमालिख्य विषाणकोट्या।
तं चन्द्रमौलेस्तनयं तपोभिः अराध्यमानन्दघनं भजामि॥
पदं स्तुतीनामपदं श्रुतीनाम् लीलावतारं परमात्ममूर्तेः।
नागात्मकं वा पुरुषात्मकंवात्वभेद्यमाद्यं भज विघ्नराजम्॥
पाशांकुशौ भग्नरदं त्वभीष्ट करैर्दधानं कररंध्रमुक्तैः ।
मुक्ताफलाभैः पृथुशीकरोघैः सिंचन्तमंगं शिवयोर्भजामि॥
अनेकमेकं गजमेकदन्तं चैतन्यरूपं जगदादिबीजम्।
ब्रह्मेति यं ब्रह्मविदोवदन्ति तं शंभुसूनुं शरणं भजामि॥

स्वांगस्थिताया निजवल्लभाया मुखांबुजालोकनलोलनेत्रम्।
स्मेराननाब्जं मदवैभवेन रूद्धं भजे विश्वविमोहनं तम्॥
ये पूर्वमाराध्य गजाननं त्वां सर्वाणि शास्त्राणि पठन्ति तेषाम्।
त्वत्तोनचान्यत्प्रतिपाद्यमेतैस्तदास्ति चेत्सर्वमसत्यकल्पम्॥
हिरण्यवर्णं जगदीशितारं कविं पुराणं रविमंडलस्थलम्।
गजाननं यं प्रविशन्ति सन्तस्तत्कालयोगैस्तमहं प्रपद्ये॥
वेदान्तगीतं पुरुषं भजेहम् आत्मानमानन्दघनं हृदिस्थम्।
गजाननं यन्महसा जनानां विघ्नांधकारो विलयं प्रयाति॥
शंभो समालोक्य जटाकलापे शशांकखण्डं निजपुष्करेण।
स्वभग्नदन्तं प्रविचिन्त्य मौग्ध्यादाक्रष्टुकामः श्रियमातनोतु॥
विघ्नार्गलानां विनिपातनार्थं यं नारिकेलैः कदलीफलाद्यैः।
प्रसादयन्ते मदवारणास्यं प्रभुं सदाऽभीष्टमंह भजेयम् ॥
यज्ञैरनेकैर्बहुभिस्तपोभिराराघ्यमाद्यं गजराजवक्त्रम्।
स्तुत्याऽनया विधिवत्स्तु वन्ति ते सर्वलक्ष्मीनिलया भवन्ति॥

卐卐卐卐卐

### श्रीगणेशपञ्चरत्नम्

सरागिलोक दुर्लभं विरागिलोपिूजितम् ।
सुरासुरैनर्मस्कृतं जरादिमृत्युनाशकम् ।
गिरा गुरुं श्रिया हरिं जयन्तियत्पदार्चकाः ।
नमामि तं गणाधिपंकृपापयः पयोनिधिम् ॥१॥
गिरीन्द्रजामुखाम्बुज प्रमोददान भास्करम् ।
करीन्द्रवक्त्र मानताघ संघ वारणोद्यतम् ।
सरीसृपेशबद्धकुक्षिमाश्रयामि संततं ।
शरीरकान्ति निर्जिताब्ज बन्धुबालसन्ततिम् ॥२॥
शुकादिमौनिवन्दितं गकारवाच्यमक्षरं ।
प्रकाममिष्टदायिनं सकामनम्रपंक्तये ।
चकासनं चतुर्भुजैर्विकासपद्म पूजितम् ।
प्रकाशितात्मतत्त्वकं नमाम्यहं गणाधिपम् ॥३॥
नराधिपत्वदायकं स्वरादिलोकदायकम् ।
ज्वरादिरोगवारकं निराकृतासुरव्रजम् ।
कराम्बुजैर्धरन्सृणिं विकारशून्यमानसैः ।
हृदा सदा विभावितं मुदा नमामि विघ्नपम् ॥४॥
श्रमापनोदनक्षमं समाहितान्तरात्मनां ।
समादिभिः सदार्चितं क्षमानिधिं गणाधिपम् ।
रमाधवादि पूजितं यमान्तकात्मसम्भवम् ।
शमादि षड्गुणप्रदं नमामि तं विभूतये ॥५॥
गणाधिपस्य पञ्चकं नृणामभीष्टदायकम् ।
प्रणामपूर्वकं जनाः पठन्ति ये मुदायुताः ।
भवन्ति ते विदाम्पुरः प्रगीत वैभवाःजनाश्चिरायुषोधिक
श्रियस्सुसूनवोनसंशयः ॥६॥

卐卐卐

## अघमर्षण होम मंत्र

अग्निर्मन्वेति प्रथमस्यप्रचेतसोयं पांचजन्यं बहवः समिन्धते विश्वस्यां विशि प्रवीविशि वास्समीमहेस स नो मुचत्वंहसः । अग्नये स्वाहा । इदमग्नये न मम ।१।

यस्सेदं प्राण निमषद्यदेजति यस्य जातं जनमानं च केवलं स्तौम्यग्निं नाथितो जोहवीमि स नो मुंचत्वंहसः। अग्नयेस्वाहा । इदमग्नये न मम ।२।

इन्द्रस्य मन्ये प्रथमस्य प्रचेतसो वृत्रघ्नः स्तोमामुपागुः योदाशुषः सृकृतो हवमुपगन्ता स नो मुचंत्वंहाः । अग्नये स्वाहा। इदमग्नये न मम ।३।

यः संग्रामंनयतिसंवशी युधे यः पृष्टानि संसृजति त्रयाणिस्तौभीन्द्रं नाथितो जोहवीमि स नो मुंचत्वंहसः । इन्द्राय स्वाहा । इदमिन्द्राय न मम ।४।

मन्वेवां मित्रावरुणा तस्य वित्तं सत्यौजसा दूहणा यन्नुदेते । त्या राजानें सरथे पाथं उग्रतौ नो मुंचतमागसः । मित्रावरुणाभ्यां स्वाहा । इदं मित्रावरुणाभ्यां न मम ।५।

यो वां रथः सजरश्मिः सत्यधर्मा मिथश्चरत्वांसमुपयाति दूषयन् स्तौमिमित्रावरुणौ नाथितौजोहवीमि तौ नो मुंचतमागसः । मित्रावरुणाभ्यां स्वाहा । इदम् मित्रावरुणाभ्यां न मम ।६।

वायोस्सवितुर्वितथानि मन्महे यावात्मन् वद्विभृतौ यौ च रक्षतः यौ विश्वस्य परिभू बभूवतु स्तौ नो मुचतमागसः । वायु सूर्याभ्यां स्वाहा । इदम् वायु सूर्याभ्यां न मम ।७।

उपश्रेष्ठा न आशिषो देवयोर्धर्मे अस्थिरन् स्तौमि वायुं सवितारं नाथितो जोहवीमि तौ नो मुंचतमागसः । वायु सूर्याभ्यां स्वाहा । इदम् वायु सूर्याभ्यां न मम ।८।



रथीतमौ रथीनामह्व ऊतये शुभं गमिष्ठौ सुयमेभिरश्वैः ययोर्वान्देवौदेवेष्वनिशितमोजस्तौ नो मुंचत मागसः । अश्विभ्यां स्वाहा । इदम् अश्विभ्यां न मम ।९।

यदयातं वहंतु सूर्यायास्त्रिचक्रेण संसदमिच्छमानौ स्तौमि विश्वान्देवान्नाथितो जोहवीमि तौ नो मुंचतमागसः । अश्विभ्यां स्वाहा । इदमश्विभ्यां न मम ।१०।

मरुता मन्वे अधि नो ब्रुवन्तु प्रेमां विश्वे आसून्हवे सुयमानूतये ते नो मुंचन्तवेनसः । मरुद्भ्यः स्वाहा । इदमरुद्भ्यः न मम ।११।

तिग्भायुध व्रीडित सहस्वद्दिव्यः सर्वः पृतनासु विष्णु स्तौमि देवाान्मरुतौ नाथितो जोहवीमि ते नो मुंचन्त्वेनसः । मरुद्भ्यः स्वाहा । इदम् मरुद्भ्यः न मम ।१२।

देवानां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे आसून्हवे सुरामनूतये ते नो मुंचन्त्वेनसः । विश्वेभ्यः देवेभ्यः स्वाहा । इदम् विश्वेभ्यः देवेभ्यः न मम ।१३।

यदिदं माभिशेचति पौरुषेयेण दैव्येन स्तौमि विश्वान्देवान्नाथितो जोहवीमि ते नो मुंचन्त्वेनसः । विश्वेभ्यः देवेभ्यः स्वाहा। इदम् विश्वेभ्यः देवेभ्यः न मम ।१४।

अनुनोद्यानुमतिर्यज्ञं देवेषुमन्यताम् अग्निश्चहव्यवाहनो भवतां दाशुषे मयः । अनुमत्यै हव्यवाहाग्नये स्वाहा । इदमनुमत्यै हव्यवाहाग्नये न मम ।१५।

अन्विदनुमते त्वमनन्यासैशं च नः कृधि क्रत्वे दक्षाय नो हिनु प्राणाय प्रण आयुषि वारिषः । अनुमत्यै स्वाहा । इदमनुमत्यै न मम ।१६।

वैश्वानरो न कृतं ये प्रयातु परावतः अग्निर्न सुष्ठुतेती रुष । वैश्वानराय अग्नये स्वाहा । इदम् वैश्वानराय अग्नये न मम । १७।

पृष्टो दिवि पृष्टो अग्निः पृथिव्याः पृष्टो विश्वा औषधीराविवेश वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा सरिषः पातु नक्तम् । वैश्वानराय अग्नये स्वाहा । इदम् वैश्वानराय अग्नये न मम ।१८।

ये अप्रथेता अमितेभिरोजोभिर्ये प्रतिष्ठे अभवतां वसूनां स्तौमि द्यावापृथिवीं नाथितो जोहवीमि ते नो मुंचन्त्वेनसः । द्यावा पृथिवीभ्यां स्वाहा । इदम् द्यावा पृथिवीभ्यां न मम ।१९।

ऊर्वा रोदसि वरिवः कृणोत्तं क्षेत्रस्य पत्नी अधि नो ब्रूयात्तं स्तौमि द्यावापृथिवीं नाथितो जोहवीमि ते नो मुंचत मंहसः । द्यावापृथिवीभ्यां स्वाहा । इदम् द्यावापृथिवीभ्यां न मम ।२०।

यत्ते वयं पुरुषत्रा यविष्ठा विद्वांसश्चकृपा कंचनागः कृधा स्वस्मानदितेरना गव्यांसि शिश्रथो विष्वगग्रे। अग्नये स्वाहा इदमग्नये न मम ।२१।

यथाहताद्वसवो गौर्यचित्पदिषिता ममुंचता यजत्राः एवोष्वस्मन्मुचतमंहः प्रातर्यग्ने प्रतरं न आयुः। अग्नये स्वाहा । इदमग्नये न मम ।२२।

यावामित्रावरुणा यतव्या तनूस्तये ममांहसो मुंचतम् । इन्द्रावरुणाभ्यां स्वाहा । इदमिन्द्रावरुणाभ्यां न मम ।२३। यावामिन्द्रावरुणा सहस्या तनूस्तये ममांहसो मुंचतम् । इन्द्रावरुणाभ्यां स्वाहा । इदमिन्द्रावरुणाभ्यां न मम ।२४।

यावामिन्द्रावरुणा रक्षास्या तनूस्तये ममांहसो मुंचतम् । इन्द्रावरुणाभ्यां स्वाहा । इदमिन्द्रावरुणाभ्यां न मम ।२५। यावामिन्द्रावरुणा तेजस्या तनूस्तये ममांहसो मुंचतम् । इन्द्रावरुणाभ्यां स्वाहा । इदमिन्द्रावरुणाभ्यां न मम ।२६।

यो वामिन्द्रावरुणावग्नौ स्नामस्तं वामे तेनावयजे । इन्द्रावरुणाभ्यां स्वाहा । इदमिन्द्रावरुणाभ्यां न मम ।२७।



यो वामिन्द्रावरुणौ द्विपात्सु पशुषु स्नाम स्तं वामे तेनावयजे । इन्द्रावरुणाभ्यां स्वाहा । इदमिन्द्रावरुणाभ्यां न मम ।२८।

यो वामिन्द्रावरुणौधीषु स्नामस्तं वामे तेनावयजे । इन्द्रावरुणाभ्यां स्वाहा । इदमिन्द्रावरुणाभ्यां न मम ।२९।

यो वामिन्द्रावरुणा वनस्पतिषु स्नामस्तं वामे तेनावयजे । इन्द्रावरुणाभ्यां स्वाहा । इदमिन्द्रावरुणाभ्यां न मम ।३०।

पवमानः सोद्य विचर्षणिः यः पोता स पुनातु मा । पावमानीभ्यः स्वाहा। इदं पावमानीभ्यः न मम ।३१।

पुनन्तु मा देवजनाः पुनन्तु मनसा धियः पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा। पावमानीभ्यः स्वाहा । इदम् पावमानीभ्यः न मम ।३२।

जातवेदः पवित्रवत्पवित्रेण पुनीहि मा शुक्रेण देवदीव्यदग्ने ऋत्वा ऋतूंरनु । अग्नये जातवेदसे स्वाहा । इदमग्नये जातवेदसे न मम ।३३।

यत्ते पवित्रर्र्चिष्यग्ने विततमन्तरा ब्रह्म तेन पुनीहि नः । अग्नये जातवेद से स्वाहा । इदमग्नये जातवेद से न मम ।३४।

उभाभ्यां देव सवितः पवित्रेण सवेन च मां पुनीहि विश्वतः । सवित्रे स्वाहा । इदं सवित्रे न मम ।३५।

वैश्वदेवी पुनन्ती देव्यागादयस्यामि मा बह्वयस्तन्वो बीतपृष्ठाः तया मदन्तः सधमादेषु वयं स्याम पतयो रयीणाम् । वैश्वदेव्यै स्वाहा । इदम वैश्वदेव्यै न मम ।३६।

वैश्वानरो रश्मिभिर्मा पुनातु वातः प्राणेनेषिरो मयोभूः द्यावापृथिवी पयसा पयोभिः शतावरी यज्ञिये मा पुनीतम् । द्यावापृथिवीभ्यां स्वाहा । इदम् द्यावापृथिवीभ्यां न मम ।३७।

बृहद्भिः सवितुस्त्रिभिर्वर्षिष्ठैर्देव मन्मभिः अग्ने दक्षैः पुनीहि मा । सवित्रे अग्नये स्वाहा । इदम् सवित्रे अग्नये न मम ।३८।

येनदेवा अपुनन्त येनपो दिव्यंकशः तेन दिव्यं ब्रह्मणा इदं ब्रह्मपुनीहि मा। दिव्याय ब्रह्मणे स्वाहा । इदं दिव्याय ब्रह्मणे न मम ।३९।

यः पावमानीरध्येतृषिभिः संभृतं रसम् सर्वं सपूतमश्नाति स्वदितं मातरिश्वनो । पावमानीभ्यः स्वाहा । इदम् पावमानीभ्यः न मम ।४०।

पावमानीर्ये अध्येतृषिभिः संभृतम् रसभ् तस्मैसरस्वती दुहे क्षीरं सर्पिर्मधूदकम् । पावमानीभ्यः स्वाहा । इदम् पावमानीभ्यः न मम ।४१।

पावमानीः स्वत्स्ययनीः सुदुधा हि पयस्वतीः ऋषिभिः संभृतो रसो ब्राह्मणेष्वमृतं हितम् । पावमानीभ्यःस्वाहा । इदम्पावमानीभ्यः न मम ।४२।

पावमानीर्दिशन्तु न इमं लोकमथो असुम् कामान्समर्धयन्तु नो देवैर्देवीः समीहिता। पावमानीभ्यः स्वाहा । इदम् पावमानीभ्यः न मम ।४३।

पावमानीर्दिशन्तु न इमं लोकमथो असुम् कामान्समर्धयन्तु नो देवैर्देवीः समीहिता। पावमानीभ्यः स्वाहा । इदम् पावमानीभ्यः न मम ।४४।

पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्च्युतः ऋषिभिःसंभ्सृतो रसो ब्रह्मणेष्वमृतं हितम् । पावमानीभ्यः स्वाहा । इदम्पावमानीभ्यः न मम ।४५।

येन देवाः पवित्रेण आत्मानं पुनते सदा तेन सहस्त्रधारेण पावमान्यः पुनन्तु माम्। पावमानीभ्यः स्वाहा । इदम् पावमानीभ्यः न मम ।४६।

प्राजापत्यं शताद्यामं हिरण्मयम् तेन ब्रह्मविदोवयम् पूतं ब्रह्म पुनीमहे । प्राजापत्याय ब्रह्मणे स्वाहा । इदं प्राजापत्याय ब्रह्मणे न मम ।४७।



इन्द्रः सुनीत्या सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या यमो राजा प्रमृणाभिः पुनातु मा जातवेद मोर्जयन्त्या पुनातु। सुनीत्या सहितेन्द्राय स्वाहा। इदम् सुनीत्या सहितेन्द्राय न मम ।४८।

यद्देवा देवहेडनं देवासश्चकृमा वयम् आदित्यास्तरमान्मा मुंचतर्तस्यर्तेन मामुतः । आदित्याय स्वाहा । इदम् आदित्याय न मम ।४९।

देवा जीवनकाम्या यद्वाचानृतमूदिम अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुंचतु दुरिता यानि चकृम करोतु मामनेहसम् । अग्नये गार्हपत्याय स्वाहा । इदमग्नये गार्हपत्याय न मम ।५०।

ऋतेनद्यावापृथिवी ऋतेन त्वं सरस्वती कृतान्नः पाह्येनसो यत्किचानृतमूदिम। दयावापृथिवीभ्यां स्वाहा । इदं दयावापृथिवीभ्यां न मम ।५१।

सजात शं सादुतजामिशं साज्याय सः शं सा दुत वा कनीयसः अनाज्ञातं देवकृतं यदेनस्तस्मात्त्वमस्माञ्जातवेदो मुमुग्धि। अग्नये जातवेदसे स्वाहा । इदमग्नये जातवेदसे न मम ।५२।

यद्वाचा यन्मनसा यद् बाहुभ्यामुरूभ्यामष्ठीवद्भ्यां शिश्नैर्यदनृतं चकृम वयम् अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुंचतु दुरिता यानि चकृम करोतु मामनेनसम् । अग्नये गार्हपत्याय स्वाहा । इदमग्नयेगार्हपत्याय न मम ।५३।

यद्हस्ताभ्यां चकरकिल्विषाण्यक्षाणांवसुमुजिघ्रमानः दूरेपश्या च राष्ट्रभृच्च तान्यभरसावनुदात्ता मृणानि। राष्ट्रभृद्भ्यःस्वाहा। इदंराष्ट्रभृद्भ्यः न मम ।५४।

अदीव्यन्नृणां यदहं चकार यद् वा दास्यं संजगाराजनेभ्यः अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुंचतु दुरिता यानि चकृम करोतु मामनेनसम् । अग्नये गार्हपत्याय स्वाहा। इदमग्नये गार्हपत्याय न मम ।५५।

यन्माय माता गर्भे सत्येनश्चकार यत्पिता अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुंचतु दुरिता यानि चकृम करोतु मामनेनसम्। अग्नयेगार्हपत्याय स्वाहा। इदमग्नयेगार्हपत्याय नमम ।५६।
यदा पिपेष मातरं पितरं पुत्रः प्रमुदितो धयन् अहिंसितौ पितरौ मया ततग्ने अनृणो भवाति । अग्नये स्वाहा । इदमग्नये न मम ।५७।

यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरम् पितरं वा जिहिंसिम अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुंचतु दुरिता यानि चकृम करोतु मामनेनसम् । अग्नये गार्हपत्याय स्वाहा। इदमग्नये गार्हपत्याय न मम ।५८।

यदाशसा निशसा यत्पराशसा यदेनश्चकृमा नूतनं यत् पुराणम् अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुंचतु दुरिता यानि चकृम करोतु मामनेनसम् । अग्नये गार्हपत्याय स्वाहा। इदमग्नये गार्हपत्याय न मम ।५९।

अतिक्रमामि दुरियं यदेनो जहामि रिप्रं परमे सधस्थे यत्र यान्ति सुकृतो नापि दुष्कृतस्तमारोहामि सुकृतान्नु लोक त्रिते। अग्नये गार्हपत्याय स्वाहा । इदमग्नये गार्हपत्याय न मम ।६०।

देवा अमृजतैतदेनस्त्रित एतन्मनुष्येषु मामृजे ततो मा यदिं किंचिदानशोग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुंचतु दुरिता यानि चकृम करोतु मामनेनसम् । अग्नये गार्हपत्याय स्वाहा। इदमग्नये गार्हपत्याय न मम ।६१।

दिवि जाता अप्सु जाता या जाता औषधीभ्य अथो या अग्निजा आपस्ता नः शुन्धन्तु शुंधनीः । अद्भ्यः स्वाहा । इदम् अद्भ्यः न मम ।६२।

यदापो नक्तं दुरितं चराम यद् वा दिवा नूतनं यत्पुराणम् हिरण्यवर्णास्तत उत्पुनीत नः । अद्भ्यः स्वाहा । इदमद्भ्यः न मम ।६३।
इमम्मे वरुण श्रुधी हवमद्या चमृलय त्वामवस्थुरा चक्रे । वरुणाय स्वाहा । इदम् वरुणाय न मम ।६४।

तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः अहेडमानो वरुणोहबोध्युरुशंसमा न आयुः प्रमोषी । वरुणाय स्वाहा । इदं वरुणाय न



मम ।६५।

त्वन्नो अग्ने वरुणस्य विद्वान देवस्य हेडो अवयासिसीष्ठाः यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत्। अग्निवरुणाभ्यां स्वाहा । इदमग्निवरुणाभ्यां न मम ।६६।

सत्वन्नो अग्नेवमो भवोतीर्नेदिष्ठो अस्या उषसो व्युष्टौ अवयक्ष्व नो वरुणं रराणो व्रीहि मृडीकं सुहवो न एधि । अग्नि वरुणाभ्यां स्वाहा । इदमग्निवरुणाभ्यां न मम ।६७।

त्वमग्ने अयास्ययासन्मनसा हितः अयासन्हव्यमूहिषे या नो धेहि भेषजम् । अग्नये स्वाहा । इदम्ग्नये न मम ।६८।

वैश्वानरो न ऊतये वयातु परावतः अग्निर्नः सुष्ठुती रूप । वैश्वानराय अग्नये स्वाहा । इदम् वैश्वानराय अग्नये न मम ।६९।

ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् अजस्त्रं धर्ममीमहे वैश्वानराय अग्नये स्वाहा । इदम् वैश्वानराय अग्नये न मम ।७०।

वैश्वानरस्य दंसनाभ्यो बृहदरिणादेकः स्वपश्यया कविः उभा पितरा महयन्नजायताग्निर्द्यावा पृथिवी भूरि रेतसा ।वैश्वानराय अग्नये स्वाहा । इदम् वैश्वानराय अग्नये न मम ।७१।

पृष्टो दिवि पृष्टो अग्निः पृथ्व्यिां पृष्टो विश्वा औषधीराविवेश वैश्वानरः सहसा पृष्टो अग्निः समो नो दिवा सरिपः पातु नक्तम् वैश्वानराय अग्नये स्वाहा । इदम् वैश्वानराय अग्नये न मम ।७२।

जातो यदग्ने भुवना व्यख्यः पशुं न गोपा ईर्यः परिज्मा वैश्वानर ब्रह्मणे विन्दगातुं यूयं यात स्वस्तिभिः सदा नः। वैश्वानराय अग्नये स्वाहा । इदम् वैश्वानराय अग्नये न मम ।७३।

त्वमग्ने शोचिषा शोशुचान आरोदसी अपृणा जायमानः त्वं देवानभिशस्तेरमुचो वैश्वानर जातवेदो महित्वा । वैश्वानराय अग्नये स्वाहा । इदम् वैश्वानराय अग्नये न मम ।७४।
अस्माकमग्ने मधवत्सुधारयानामिक्षत्रमजरं सुवीर्यम् वयं जयेम शतिनं सहस्त्रिणं वैश्वानर वाजमग्नो तवोतिभिः। वैश्वानराय अग्नये स्वाहा । इदम् वैश्वानराय अग्नये न मम ।७५।

वैश्वानरस्य सुमनौस्यामराजाहिकं भुवनानाभिः श्रीः इतो जातो विश्वमिदं विचष्टे वैश्वानरो यतते सूर्याय । वैश्वानराय अग्नये स्वाहा । इदम् वैश्वानराय अग्नये न मम ।७६।

यद्देवा देव हेडनं देवासश्चकृमा वयमादित्यास्तस्मान्मा मंचतर्तस्यर्तेन मा मुतः। देवेभ्यः आदित्येभ्यः स्वाहा । इदम् देवेभ्यः आदित्येभ्यः न मम ।७७।

देवाः जीवनकाम्या यद्वाचानृतमूदिम तस्मान्न इह मुंचत विश्वेदेवाः सजोषसः। विश्वेभ्यो देवेभ्यः स्वाहा । इदम् विश्वेभ्यो देवेभ्यः न मम ।७८।

ऋतेनद्यावापृथिवी ऋतेनत्वं सरस्वती कृतान्नः पाह्यनेसो यत्किचानृतमूदिम । द्यावापृथिवीभ्यां स्वाहा । इदम् द्यावापृथिवीभ्यां न मम ।७९।

इन्द्राग्निी मित्रावरुणौ सोमो धाता बृहस्पतिः ते नो मुंचन्त्वेनसो यत्किचानृतमूदिम । इन्द्राग्नीभ्यां स्वाहा । इदमिन्द्राग्नीभ्यां न मम ।८०।



## नेत्रोपनिषत्

अस्याश्चाक्षुषविद्याया अहिर्बुध्न्य ऋषिः, गायत्री छन्दः, सविता देवता, चक्षूरोगनिवृत्तये जपे विनियोगः ॥ ॐ चक्षुश्चक्षुश्चक्षुस्तेजः स्थिरो भव मां पाहि त्वरितं चक्षूरोगान् शमय शमय मम जातरूपं तेजो दर्शय दर्शय यथाहमन्धो न स्यां तथा कृपया कल्याणं कुरु कुरु मम यानि यानि पूर्वजन्मोपार्जितानि चक्षुःप्रतिरोधकदुष्टकृतानि तानि सर्वाणि निर्मूलय । ॐ नमश्चक्षुस्तेजोदात्रे दिव्यभास्कराय। ॐ नमः करुणाकराय अमृताय । ॐ नमो भगवते सूर्याय । अक्षितेजसे नमः । खेचराय नमः । महते नमः । रजसे नमः । तमसे नमः । असतो मा सद्गमय । तमसो मा ज्योतिर्गमय । मृत्योर्मामृतं गमय । उष्णो भगवान् शुचिरूपः हंसो भगवान् शुचिरप्रतिरूपः य इमां चाक्षुष्मतीं विद्यां ब्राह्मणो नित्यमधीते न तस्याक्षिरोगो भवति न तस्य कुलेऽन्धो भवति । अष्टौ ब्राह्मणान् ग्राहयित्वा विद्यासिद्धिर्भवति । ॐ विश्वरूपं घृणिनं जातवेदसं हिरण्यमयं ज्योतिरूपं तपन्तं सहस्ररश्मिभिः शतधा वर्तमानः पुरः प्रजानामुदयत्येष सूर्यः । ॐ नमो भवगते आदित्याय अवाग्वादिने स्वाहा ॥

卐 卐 卐

## सूर्याष्टकम्

आदिदेव नमस्तुभ्यं प्रसीद मम भास्कर ।
दिवाकर नमस्तुभ्यं प्रभाकर नमोऽस्तु ते ॥१॥
सप्ताश्वरथमारूढं प्रचण्डं कश्यपात्मजम् ।
श्वेतपद्मधरं देवं तं सूर्यं प्रणमाम्यहम् ॥२॥
लोहितं रथमारूढं सर्वलोकपितामहम् ।
महापापहरं देवं तं सूर्यं प्रणमाम्यहम् ॥३॥
त्रैगुण्यं च महाशूरं ब्रह्मविष्णुमहेश्वरम् ।
महापापहरं देवं तं सूर्यं प्रणमाम्यहम् ॥४॥
बृंहितं तेजःपुञ्जं च वायुमाकाशमेव च ।
प्रभुं च सर्वलोकानां तं सूर्यं प्रणमाम्यहम् ॥५॥
बन्धूकपुष्पसङ्काशं हारकुण्डलभूषितम् ।

एकचक्रधरं देवं तं सूर्यं प्रणमाम्यहम् ॥६॥
तं सूर्यं जगत्कर्तारं महातेजःप्रदीपनम् ।
महापापहरं देवं तं सूर्यं प्रणमाम्यहम् ॥७॥
तं सूर्यं जगतां नाथं ज्ञानविज्ञानमोक्षदम् ।
महापापहरं देवं तं सूर्यं प्रणमाम्यहम् ॥८॥

इति श्रीशिवप्रोक्तं सूर्याष्टकं सम्पूर्णम् ।

卐 卐 卐

## आदित्यहृदयम्

रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतम् ।
पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ॥१॥
सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः ।
एष देवासुरगणान् लोकान्पातिगभस्तिभिः ॥२॥
एष ब्रह्माचविष्णुश्च शिवःस्कन्दः प्रजापतिः ।
महेन्द्रोधनदः कालोयमः सोमोह्यपांपतिः ॥३।
पितरो वसवः साध्या ह्यश्विनौ मरुतो मनुः ।
वायु-र्वह्निः प्रजाप्राण ऋतुकर्ता प्रभाकरः ।४।
आदित्यः सवितासूर्यः खगः पूषा गभस्तिमान् ।
सुवर्णसदृशो भानुर्हिरण्यरेतादिवाकरः ।५।
हरिदश्वः सहस्त्रार्चिः सप्तसप्तिर्मरीचिमान् ।
तिमिरोन्मथनः शम्भुस्त्वष्टा मार्तण्डांशुमान् ।६।
हिरण्यगर्भः शिशिरस्तपनो भास्करो रविः ।
अग्निगर्भोऽदिते पुत्रः शंखःशिशिरनाशनः ।७।
व्योमनाथस्तमोभेदी ऋग्यजुस्सामपारगः ।
घनवृष्टिरपां मित्रो विन्ध्यवीथीप्लवङ्गमः ॥८॥
आतपी मण्डली मृत्युः पिङ्गलः सर्वतपनः ।
कविर्विश्वो महातेजाः रक्त सर्वभवोद्भवः ॥९॥



नक्षत्रग्रहतारणा-मधिपो विश्वभावनः ।
तेजसामपि तेजस्वी द्वादशात्मन्नमोऽस्तु ते ॥१०॥
नमः पूर्वाय गिरये पश्चिमायाद्रये नमः ।
ज्योति-र्गणानां पतये दिनाधिपतये नमः ॥११॥
जयाय जयभद्राय हर्यश्वाय नमो नमः ।
नमो नमः सहस्त्रांशो आदित्याय नमो नमः ॥१२॥
नम उग्राय वीराय सारङ्गाय नमो नमः ।
नमः पद्मप्रबोधाय मार्तण्डाय नमो नमः ॥१३॥
ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे ।
भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ॥१४॥
तमोघ्नाय हिमघ्नाय शत्रुघ्नायमितात्मने ।
कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ॥१५॥
तप्तचामीकराभाय वह्नये विश्वकर्मणे ।
नमस्तमोऽभिनिघ्नाय रुचये लोकसाक्षिणे ॥१६॥
नाशयत्येष वै भूतं तदेव सृजति प्रभुः ।
पायत्येष तपत्येष वर्षत्युेष गभस्तिभिः ॥१७॥
एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः ।
एष एवग्निहोत्रं च फलं चैवग्निहोत्रिणाम् ॥१८॥
वेदाश्च ऋतवश्चै व ऋतूनां फलमेव च ।
यानि कृत्यानि लोकेषु सर्वेषः रविः प्रभुः ।१९।

卐 卐 卐

## श्रीसूर्यमण्डलाष्टकम्

नमः सवित्रे जगदेकचक्षषे जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे विरञ्चिनारायणशङ्करात्मने ॥१॥
यन्मण्डलं दीप्तिकरं विशालं रत्नप्रभं तीव्रमनादिरूपम् ।
दारिद्र्यदुःखक्षकारणं च पुनातु मां तत्सवितुर्वरेण्यम् ॥२॥
यन्मण्डलंदेवगाणैः सुपूजितं विप्रैःस्तुतं भावनमुक्तिकोविदम् ।
तं देवदेवं प्रणमामि सूर्यं पुनातु मां तत्सवितुर्वरेण्यम् ॥३॥

यन्मण्डलं ज्ञानघनं त्वगम्यं त्रैलोक्यपूज्यं त्रिगुणात्मरूपम् ।
समस्ततेजोमयदिव्यरूपं पुनातु मां तत्सवितुर्वरेण्यम् ॥४॥
यन्मण्डलं गूढ़मतिप्रबोधं धर्मस्य वृद्धिं कुरुते जनानाम् ।
यत्सर्वपापक्षयकारणं च पुनातु मां तत्सवितुर्वरेण्यम् ॥५॥
यन्मण्डलं व्याधिविनाशदक्षं यदृग्यजुःसामसु संप्रगीतम् ।
प्रकाशितं येन च भूर्भुवः स्वः पुनातु मां तत्सवितुर्वरेण्यम् ॥६॥
यन्मण्डलं वेदविदो वदन्ति गायन्ति यच्चारणसिद्धसंघाः ।
यद्योगिनो योगजुषां च संघाः पुनातु मां तत्सवितुर्वरेण्यम् ॥७॥
यन्मण्डलं सर्वजनेषु पूजितं ज्योजि श्च कुर्यादिह मर्त्यलोके ।
यत्कालकल्पक्षयकारणं च पुनातु मां तत्सवितुर्वरेण्यम् ॥८॥
यन्मण्डलं विश्वसृजां प्रसिद्धमुत्पत्तिरक्षाप्रलयप्रगल्लभम् ।
यस्मिञ्जगत्संहरतेऽखिलञ्च पुनातु मां तत्सवितुर्वरेण्यम् ॥९॥
यन्मण्डलं सर्वगतस्य विष्णोरात्मा परं धाम विशुद्धतत्त्वम् ।
सूक्ष्मान्तरैर्योगपथानुगम्यं पुनातु मां तत्सवितुर्वरेण्यम् ॥१०॥
यन्मण्डलं वेदविदो वदन्ति गायन्ति यच्चारणसिद्धसंघाः ।
यन्मण्डलं वेदविदः स्मरन्ति पुनातु मां तत्सवितुर्वरेण्यम् ॥११॥
यन्मण्डलं वेदविदोपगीतं यद्योगिनां योगपथानुगम्यम् ।
तत्सर्ववेदं प्रणमामि सूर्यं पुनातु मां तत्सवितुर्वरेण्यम् ॥१२॥
मण्डलाष्टतयं पुण्यं यः पठेत्सततं नरः ।
सर्वपापविशुद्धात्मा सूर्यलोके महीयते ॥१३॥
इति श्रीमदादित्यहृदये मण्डलाष्टकं सम्पूर्णम् ।

## सूर्यस्तोत्र

(महाभारतवनपर्व तृतीय अध्याय)

धौम्य उवाच

सूर्योऽर्यमा भगस्त्वष्टा पूषार्कः सविता रविः ।
गभस्तिमानजः कालो मृत्युर्धाता प्रभाकरः ॥
पृथिव्यापश्च तेजश्च खं वायुश्च परायणम् ।
सोमो बृहस्पतिः शुक्रो बुधोऽङ्गारक एव च ॥
इन्द्रोविवस्वान् दीप्तांशुः शुचिःशौरिःशनैश्चरः ।



ब्रह्माविष्णुश्च रुद्रश्च स्कन्दौवैवरुणौ यमः ।
वैद्युतो जाठर श्चाग्निरैन्धनस्तेजसां पतिः ।
धर्मध्वजो वेदकर्ता वेदाङ्गो वेदवाहनः ॥
कृतं त्रेता द्वापरश्च कलिः सर्वमलाश्रयः ।
कला काष्ठा मुहूर्त्तांश्च क्षपा यामस्तथा क्षणः ॥
संवत्सरकरोऽश्वत्थः कालचक्रो विभावसुः ।
पुरुषः शाश्वतो योगी व्यक्ताव्यक्तःसनातनः ।
कालाध्यक्षः प्रजाध्यक्षो विश्वकर्मा तमोनुदः ।
वरुणः सागरोंऽशश्च जीमूतो जीवनोऽरिहा ॥
भूताश्रयो भूतपतिः सर्वलोकनमस्कृतः ।
स्त्रष्टा संवर्तको वह्निः सर्वस्यादिरलोलुपः ॥
अनन्तः कपिलो भानुः कामदः सर्वतोमुखः
।जयो विशालो वरदः सर्वधातुनिषेचिता ॥
मनःसुपर्णो भूतादिः शीघ्रगः प्राणधारकः ।
धवन्तरिर्धूमकेतुरादिदेवो दितेः सुतः ॥
द्वादशात्मारविन्दाक्षः पिता माता पितामहः ।
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टम् ॥
देहकर्ता प्रशान्तात्मा विश्वात्मा विश्वतोमुखः ।
चराचरात्मा सूक्ष्मात्मामैत्रेयः करुणान्वितः ॥
एतद् वै कीर्तनीयस्य सूर्यस्यामिततेजसः ।
नामाष्टशतकं चेदं प्रोक्तमेतत् स्वयंभुवा ॥
सुरगणपतिृयक्षसेवितंह्यसुरनिशाचरसिद्धवन्दितम् ।
वरकनकहुताशनप्रभंप्रणिपतितोऽस्मि हिताय भास्करम् ॥
सूर्योदये यः सुसमाहितः पठेत् स पुत्रदारान् धनरत्नसंचयान् ।
लभेत जातिस्मरतां नरः सदा धृतिं च मेधां च स विन्दते पुमान् ॥
इमं स्तवं देववरस्य यो नरः प्रकीर्तयेच्छुचिसुमनाः समाहितः ।
विमुच्यते शोकदवाग्निसागरा-ल्लभेत कामान् मनसा यथेप्सितान् ॥
यावज्जीवं तु नीरोगं कुरु मां च शतायुषम् ।
प्रसीद धौम्यकृतया स्तुत्या मयि विकर्तन ॥

卐卐卐

अथ सूर्योपनिषद ॥ हरिः ॐ अथ सूर्याथर्वाङ्गिरसं व्याख्यास्यामः ।ब्रह्मा ऋषिः ।
गायत्री छन्दः । आदित्यो देवता ।हंसः सोऽहमग्निनारायणयुक्तं बीजम् । हृल्लेखा
शक्तिः । वियदादिसर्गसंयुक्तं कीलकम् । चतुर्विधपुरुषार्थसिद्ध्यर्थे विनियोगः । ॥ अथ
ध्यानम् ॥ षट्स्वरारूढेन बीजेन षडङ्गं रक्ताम्बुजसंस्थितम् । सप्ताश्वरथिनं हिरण्यवर्णं
चतुर्भुजं । पद्मद्वयाभयवरदहस्तं कालचक्रप्रणेतारं । श्रीसूर्यनारायणं य एवं वेद् स वै
ब्राह्मणः । ॐ भूर्भुवःसुवः । ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः
प्रचोदयात् । सूर्य आत्मा जगतस्तस्थुषश्च । सूर्याद्वै खल्विमानि भूतानि जायन्ते ।
सूर्याद्यज्ञः पर्जन्योऽन्नमात्मा नमस्त आदित्य । त्वमेव प्रत्यक्षं कर्मकर्तासि । त्वमेव
प्रत्यक्षं ब्रह्मासि । त्वमेव प्रत्यक्षं विष्णुरसि । त्वमेव प्रत्यक्षं रुद्रोऽसि । त्वमेव
प्रत्यक्षमृगसि । त्वमेव प्रत्यक्षं यजुरसि । त्वमेव प्रत्यक्षं सामासि । त्वमेव
प्रत्यक्षमथर्वासि । त्वमेव सर्वं छन्दोऽसि । आदित्याद्वायुर्जायते ।
आदित्याद्भूमिर्जायते   आदित्यादापो जायन्ते ।
आदित्याज्ज्योतिर्जायते ।आदित्याद्व्योम दिशो जायन्ते । आदित्याद्देवा
जायन्ते ।आदित्याद्वेदा जायन्ते ।आदित्यो वा एष एतन्मण्डलं तपति । असावादित्यो
ब्रह्म ।आदित्योऽन्तःकरणमनोबुद्धिचित्ताहङ्काराः । आदित्यो वैव्यानः
समानोदानोऽपानः प्राणः ।आदित्यो वै श्रोत्रत्वक्चक्शूरसनघ्राणाः । आदित्यो वै
वाक्पाणिपादपायूपस्थाः ।आदित्यो वै शब्दस्पर्शरूपरसगन्धाः । आदित्यो वै
वचनादानागमनविसर्गानन्दाः ।आनन्दमयो ज्ञानमयो विज्ञानानमय आदित्यः । नमो
मित्रायभानवे मृत्योर्मा ं पाहि । भ्राजिष्णवे विश्वहेतवे नमः । सूर्याद्भवन्ति भूतानि
सूर्येण पालितानि तु । सूर्ये लयं प्राप्नुवन्ति यः सूर्यः सोऽहमेव च । चक्षुर्नो देवः
सविता चक्शुर्न उत पर्वतः । चक्षुर्धाता दधातु नः । आदित्याय विद्महे सहस्त्रकिरणाय
धीमहि । तानः सूर्य प्रचोदयात् ।सविता पश्चात्तात्सविता
पुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ।सविता नः सुवतु सर्वतातिं सविता नो रासतां
दीर्घमायुः ।ॐघृणिः सूर्यः आदित्यः ॐ इत्येकाक्शरं ब्रह्म । घृणिरिति द्वे अक्शरे ।
सूर्यइत्यक्षरद्वयम् । आदित्य इति त्रीण्यक्शराणि ।एतस्यैव सूर्यस्याष्टाक्शरो मनुः । यः
सदाहरहर्जपति स वै ब्राह्मणो भवति स वै ब्राह्मणो भवति ।सूर्याभिमुखो जप्त्वा
महाव्याधिभयात्प्रमुच्यते ।अलक्षमीर्नश्यति । अभक्श्यभक्शणात्पूतो भवति ।
अगम्यागमनात्पूतो भवति । पतितसम्भाषणात्पूतो भवति ।
असत्सम्भाषणात्पूतो भवति ।मध्याह्ने सूराभिमुखः पठेत् ।
सद्योत्पन्नपञ्चमहापातकात्प्रमुच्यते ।सैषां सावित्रीं विद्यां न किञ्चिदपि न
कस्मैचित्प्रशंसयेत् ।य एतां महाभागः प्रातः पठति स भाग्यवाञ्जायते ।
पशून्विन्दति । वेदार्थं लभते ।त्रिकालमेतज्जप्त्वा क्रतुशतफलमवाप्नोति । यो हस्तादित्ये
जपति स महामृत्युं तरति य एवं वेद ॥इत्युपनिषत् ॥

## श्री कनकधारास्तोत्रं

अङ्गं हरेः पुलकभूषणमाश्रयन्ती भृङ्गाङ्गनेव मुकुलाभरणं तमालम्।
अङ्गीकृताखिलविभूतिरपाङ्गलीला माङ्गल्यदास्तु मम मङ्गळदेवतायाः ॥ १ ॥
मुग्धा मुहुर्विदधती वदने मुरारेः प्रेमत्रपाप्रणिहितानि गतागतानि।
माला दृशोर्मधुकरीव महोत्पले या सा मे श्रियं दिशतु सागरसंभवायाः ॥ २ ॥
आमीलिताक्शमधिगम्य मुदा मुकुन्दं आनन्दकन्दमनिमेषमनङ्गतन्त्रम्।
आकेकरस्थितकनीनिकपक्श्मनेत्रं भूत्यै भवेन्मम भुजङ्गशयाङ्गनायाः ॥ ३ ॥
बाह्वन्तरे मधुजितः श्रितकौस्तुभे या हारावलीव हरिनीलमयी विभाति।
कामप्रदा भगवतोऽपि कटाक्शमाला कल्याणमावहतु मे कमलालयायाः ॥ ४ ॥
कालाम्बुदाळिललितोरसि कैटभारेः धाराधरे स्फुरति या तडिदङ्गनेव।
मातुस्समस्तजगतां महनीयमूर्तिः भद्राणि मे दिशतु भार्गवनन्दनायाः ॥ ५ ॥
प्राप्तं पदं प्रथमतः खलु यत्प्रभावात् माङ्गल्यभाजि मधुमाथिनि मन्मथेन।
मय्यापतेत्तदिह मन्थरमीक्शणार्धं मन्दालसं च मकरालयकन्यकायाः ॥ ६ ॥
विश्वामरेन्द्रपदवीभ्रमदानदक्शं आनन्दहेतुरधिकं मुरविद्विषोऽपि।
ईषन्निषीदतु मयि क्शणमीक्शणार्द्धम् इन्दीवरोदरसहोदरमिन्दिरायाः ॥ ७ ॥
इष्टा विशिष्टमतयोऽपि यया दयार्द्र दृष्ट्या त्रिविष्टपपदं सुलभं लभन्ते।
दृष्टिः प्रहृष्टकमलोदरदीप्तिरिष्टां पुष्टिं कृषीष्ट मम पुष्करविष्टरायाः ॥ ८ ॥
क्ष्क्ष्क्ष दद्याद्दयानुपवनो द्रविणाम्बुधारां अस्मिन्नकिञ्चनविहङ्गशिशौ विषण्णे।
दुष्कर्मघर्ममपनीय चिराय दूरं नारायणप्रणयिनीनयनाम्बुवाहः ॥ ९ ॥
गीर्देवतेति गरुडध्वजसुन्दरीति शाकम्बरीति शशिशेखरवल्लभेति।
सृष्टिस्थितिप्रलयकेलिषु संस्थिता या तस्यै नमस्त्रिभुवनैकगुरोस्तरुण्यै ॥ १० ॥
श्रुत्यै नमोऽस्तु शुभकर्मफलप्रसूत्यै रत्यै नमोऽस्तु रमणीयगुणार्णवायै।
शक्त्यै नमोऽस्तु शतपत्रनिकेतनायै पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायै ॥ ११ ॥
नमोऽस्तु नालीकनिभाननायै नमोऽस्तु दुग्धोदधिजन्मभूम्यै।
नमोऽस्तु सोमामृतसोदरायै नमोऽस्तु नारायणवल्लभायै ॥ १२ ॥
नमोऽस्तु हेमाम्बुजपीठिकायै नमोऽस्तु भूमण्डलनायिकायै।
नमोऽस्तु देवादिदयापरायै नमोऽस्तु शार्ङ्गायुधवल्लभायै ॥ १३ ॥
नमोऽस्तु देव्यै भृगुनन्दनायै नमोऽस्तु विष्णोरुरसि स्थितायै।
नमोऽस्तु लक्श्म्यै कमलालयायै नमोऽस्तु दामोदरवल्लभायै ॥ १४ ॥
नमोऽस्तु कान्त्यै कमलेक्शणायै नमोऽस्तु भूत्यै भुवनप्रसूत्यै।
नमोऽस्तु देवादिभिरर्चितायै नमोऽस्तु नन्दात्मजवल्लभायै ॥ १५ ॥
सम्पत्कराणि सकलेन्द्रियनन्दनानि साम्राज्यदानविभवानि सरोरुहाक्शि।
त्वद्वन्दनानि दुरिताहरणोद्यतानि मामेव मातरनिशं कलयन्तु मान्ये ॥ १६ ॥



यत्कटाक्शसमुपासनाविधिः सेवकस्य सकलार्थसंपदः।
संतनोति वचनाङ्गमानसैः त्वां मुरारिहृदयेश्वरीं भजे ॥ १७ ॥
सरसिजनिलये सरोजहस्ते धवळतमांशुकगन्धमाल्यशोभे।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ १८ ॥
दिग्घस्तिभिः कनककुंभमुखावसृष्ट स्ववर्वाहिनी विमलचारुजलाप्लुताङ्गीम्।
प्रातर्नमामि जगतां जननीमशेष लोकाधिनाथगृहिणीममृताब्धिपुत्रीम् ॥ १९ ॥
कमले कमलाक्शवल्लभे त्वं करुणापूरतरङ्गितैरपाङ्गैः।
अवलोकय मामकिञ्चनानां प्रथमं पात्रमकृत्रिमं दयायाः ॥ २० ॥
देवि प्रसीद जगदीश्वरि लोकमातः कल्यानगात्रि कमलेक्शणजीवनाथे।
दारिद्र्यभीतिहृदयं शरणागतं माम् आलोकय प्रतिदिनं सदयैरपाङ्गैः ॥ २१ ॥
स्तुवन्ति ये स्तुतिभिरमीभिरन्वहं त्रयीमयीं त्रिभुवनमातरं रमाम्।
गुणाधिका गुरुतरभाग्यभागिनो भवन्ति ते भुवि बुधभाविताशयाः ॥ २२ ॥ ॥
इति श्रीमद् शङ्कराचार्यकृत श्री कनकधारास्तोत्रं संपूर्णम् ॥

## आनन्दलहरी

भवानि स्तोतुं त्वां प्रभवति चतुर्भिर्न वदनैः
प्रजानामीशानस्त्रिपुरमथनः पञ्चभिरपि।
न षड्भिः सेनानीर्दशशतमुखैरप्यहिपतिः
तदान्येषां केषां कथय कथमस्मिन्नवसरः ॥ १ ॥
घृतक्शीरद्राक्शामधुमधुरिमा कैरपि पदैः
विशिष्यानाख्येयो भवति रसनामात्र विषयः।
तथा ते सौन्दर्यं परमशिवदृङ्मात्रविषयः
कथंकारं ब्रूमः सकलनिगमागोचरगुणे ॥ २ ॥
मुखे ते ताम्बूलं नयनयुगळे कज्जलकला
ललाटे काश्मीरं विलसति गळे मौक्तिकलता।
स्फुरत्काञ्ची शाटी पृथुकटितटे हाटकमयी
भजामि त्वां गौरीं नगपतिकिशोरीमविरतम् ॥ ३ ॥
विराजन्मन्दारद्रुमकुसुमहारस्तनतटी
नदद्वीणानादश्रवणविलसत्कुण्डलगुणा।
नताङ्गी मातङ्गी रुचिरगतिभङ्गी भगवती
सती शम्भोरम्भोरुहचटुलचक्शुर्विजयते ॥ ४ ॥

नवीनार्कभ्राजन्मणिकनकभूषणपरिकरैः
वृताङ्गी सारङ्गीरुचिरनयनाङ्गीकृतशिवा ।
तडित्पीता पीताम्बरललितमञ्जीरसुभगा
ममापर्णा पूर्णा निरवधिसुखैरस्तु सुमुखी ॥ ५ ॥
हिमाद्रेः संभूता सुललितकरैः पल्लवयुता
सुपुष्पा मुक्ताभिर्भ्रमरकलिता चालकभरैः ।
कृतस्थाणुस्थाना कुचफलनता सूक्तिसरसा
रुजां हन्त्री गन्त्री विलसति चिदानन्दलतिका ॥ ६ ॥
सपर्णामाकीर्णां कतिपयगुणैः सादरमिह
श्रयन्त्यन्ये वल्लीं मम तु मतिरेवं विलसति ।
अपर्णैका सेव्या जगति सकलैर्यत्परिवृतः
पुराणोऽपि स्थाणुः फलति किल कैवल्यपदवीम् ॥ ७ ॥
विधात्री धर्माणां त्वमसि सकलाम्नायजननी
त्वमर्थानां मूलं धनदनमनीयांघ्रिकमले ।
त्वमादिः कामानां जननि कृतकन्दर्पविजये
सतां मुक्तेर्बीजं त्वमसि परमब्रह्ममहिषी ॥ ८ ॥
प्रभूता भक्तिस्ते यदपि न ममालोलमनसः
त्वया तु श्रीमत्या सदयमवलोक्योऽहमधुना ।
पयोदः पानीयं दिशति मधुरं चातकमुखे
भृशं शङ्के कैर्वा विधिभिरनुनीता मम मतिः ॥ ९ ॥
कृपापाङ्गालोकं वितर तरसा साधुचरिते
न ते युक्तोपेक्शा मयि शरणदीक्शामुपगते ।
न चेदिष्टं दद्यादनुपदमहो कल्पलतिका
विशेषः सामान्यैः कथमितरवल्लीपरिकरैः ॥ १० ॥
महान्तं विश्वासं तव चरणपङ्केरुहयुगे
निधायान्यन्नैवाश्रितमिह मया दैवतमुमे ।
तथापि त्वच्चेतो यदि मयि न जायेत सदयं
निरालम्बो लम्बोदरजननि कं यामि शरणम् ॥ ११ ॥
अयः स्पर्शे लं सपदि लभते हेमपदवीं
यथा रथ्यापाथः शुचि भवति गंगौघमिलितम् ।
तथा तत्तत्पापैरतिमलिनमन्तर्मम यदि
त्वयि प्रेम्णासक्तं कथमिव न जायेत विमलम् ॥ १२ ॥



त्वदन्यस्मादिच्छाविषयफललाभे न नियमः
त्वमर्थानामिच्छाधिकमपि समर्था वितरणे ।
इति प्राहुः प्राञ्चः कमलभवनाद्यास्त्वयि मनः
त्वदासक्तं नक्तं दिवमुचितमीशानि कुरु तत् ॥ १३ ॥
स्फुरन्नानारत्नस्फटिकमयभित्तिप्रतिफल
त्त्वदाकारं चञ्चच्छशधरकलासौधशिखरम् ।
मुकुन्दब्रह्मेन्द्रप्रभृतिपरिवारं विजयते
तवागारं रम्यं त्रिभुवनमहाराजगृहिणि ॥ १४ ॥
निवासः कैलासे विधिशतमखाद्याः स्तुतिकराः
कुटुम्बं त्रैलोक्यं कृतकरपुटः सिद्धिनिकरः ।
महेशः प्राणेशस्तदवनिधराधीशतनये
न ते सौभाग्यस्य क्वचिदपि मनागस्ति तुलना ॥ १५ ॥
वृषो वृद्धो यानं विषमशनमाशा निवसनं
श्मशानं क्रीडाभूर्भुजगनिवहो भूषणविधिः ।
समग्रा सामग्री जगति विदितैव स्मररिपोः
यदेतस्यैश्वर्यं तव जननि सौभाग्यमहिमा ॥ १६ ॥
अशेषब्रह्माण्डप्रलयविधिनैसर्गिकमतिः
श्मशानेष्वासीनः कृतभसितलेपः पशुपतिः ।
दधौ कण्ठे हालाहलमखिलभूगोलकृपया
भवत्याः संगत्याः फलमिति च कल्याणि कलये ॥ १७ ॥
त्वदीयं सौन्दर्यं निरतिशयमालोक्य परया
भियैवासीद्गंगा जलमयतनुः शैलतनये ।
तदेतस्यास्तस्माद्वदनकमलं वीक्श्य कृपया
प्रतिष्ठामातन्वन्निजशिरसिवासेन गिरिशः ॥ १८ ॥
विशालश्रीखण्डद्रवमृगमदाकीर्णघुसृण
प्रसूनव्यामिश्रं भगवति तवाभ्यङ्गसलिलम् ।
समादाय स्रष्टा चलितपदपांसून्निजकरैः
समाधत्ते सृष्टिं विबुधपुरपङ्केरुहदृशाम् ॥ १९ ॥
वसन्ते सानन्दे कुसुमितलताभिः परिवृते
स्फुरन्नानापद्मे सरसि कलहंसालिसुभगे ।
सखीभिः खेलन्तीं मलयपवनान्दोलितजले
स्मरेद्यस्त्वां तस्य ज्वरजनितपीडापसरति ॥ २० ॥ ॥

इति श्रीमच्छङ्कराचार्यविरचिता आनन्दलहरी सम्पूर्णा ॥

## नर्मदाष्टम्

सबिन्दुसिन्धुसुस्खलत्तरङ्गभृङ्गरञ्जितं द्विषत्सुपापजातजातकारिवारिसंयुतम् ।
कृतन्तदूतकालभूतभीतिहारिवर्मदे त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥१॥

त्वदम्बुलीनदीनमीनदिव्यसम्प्रदायकं कलौ मलौघभारहारि सर्वतीर्थनायकम् ।
सुमच्छकच्छनक्रचक्रवाकचक्रशर्मदे त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥२॥

महागभीरनीरपूरपातधूतभूतलं नमत्समस्तपातकारि दारितापदाचलम् ।
जगल्लये महाभये मृकण्डुसूनुहर्म्यदे त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥३॥

गतं तदैव मे भयं त्वदम्बुवीक्षितं यदा मृकण्डुसूनुशौनकासुरारिसेवितं सदा ।
पुनर्भवाब्धिजन्मसंभवाब्धिदुःखवर्मदे त्वदीयपादपङ्कजं नमामिदेवि नर्मदे ॥४॥

अलक्ष्यलक्षकिन्नरामरासुरादिपूजितं सुलक्ष्यनीरतीरधीरपक्षिलक्षकूजितम् ।
वसिष्ठशिष्टपिप्पलादिकर्दमादिशर्मदे त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥५॥

सनत्कुमारनाचिकेतकश्यपात्रिषट्पदै-र्धृतं स्वकीयमानसेषु नारदादिषट्पदैः ।
रवीन्दुरन्तिदेवदेवराजकर्मशर्मदे त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥६॥

अलक्ष-लक्ष-लक्षपापलक्षसारसायुधं ततस्तुजीवजन्तुतन्तुभुक्तिमुक्तिदायकम् ।
विरिञ्चिविष्णुशङ्करस्वकीयधामवर्मदे त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥७॥

अहो धृतं स्वनं श्रुतं महेशकेशजातटे किरातसूतवाडवेषु पण्डिते शठे नटे ।
दुरन्तपापतापहारि सर्व जन्तुशर्मदे त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥८॥

इदं तु नर्मदाष्टकं त्रिकालमेव ये सदा पठन्ति ते निरन्तरं नयान्तिदुर्गतिं कदा ।
सुलभ्यदेहदुर्लभं महेशधामगौरवं पुनर्भवा नरा नवैविलोकयन्ति रौरवम् ॥९॥

卐 卐 卐 卐 卐



## गंगास्तोत्रः

देवि सुरेश्वरि भगवति गंगे त्रिभुवनतारिणि तरल तरंगे।
शंकर मौलिविहारिणि विमले मम मति रास्तां तव पद कमले ॥ १ ॥
भागिरथि सुखदायिनि मातः तव जलमहिमा निगमे ख्यातः।
नाहं जाने तव महिमानं पाहि कृपामयि मामज्नानम्॥ २ ॥
हरि पद पाद्य तरंगिणि गंगे हिमविधुमुक्ताधवलतरंगे।
दूरीकुरु मम दुष्कृति भारं कुरु कृपया भव सागर पारम्॥ ३ ॥
तव जलममलं येन निपीतं परमपदं खलु तेन गृहीतम्।
मातर्गंगे त्वयि यो भक्तः किल तं द्रष्टुं न यमः शक्तः॥ ४ ॥
पतितोद्धारिणि जाह्नवि गंगे खण्डित गिरिवरमण्डित भंगे।
भीष्म जननि हे मुनिवरकन्ये पतितनिवारिणि त्रिभुवन धन्ये॥ ५ ॥
कल्पलतामिव फलदाम् लोके प्रणमति यस्त्वां न पतति शोके।
पारावारविहारिणि गंगे विमुखयुवति कृततरलापांगे॥ ६ ॥
तव चेन्मातः स्रोतः स्नातः पुनरपि जठरे सोपि न जातः।
नरकनिवारिणि जाह्नवि गंगे कलुषविनाशिनि महिमोत्तुंगे॥ ७ ॥
पुनरसदंगे पुण्यतरंगे जय जय जाह्नवि करुणापांगे।
इन्द्रमुकुटमणिराजितचरणे सुखदे शुभदे भृत्यशरण्ये॥ ८ ॥
रोगं शोकं तापं पापं हर मे भगवति कुमति कलापम्।
त्रिभुवनसारे वसुधाहारे त्वमसि गतिर्मम खलु संसारे॥ ९ ॥
अलकानंदे परमानंदे कुरु करुणामयि कातरवन्द्ये।
तव तट निकटे यस्य निवासः खलु वैकुण्ठे तस्य निवासः॥ १० ॥
वरमिह नीरे कमठो मीनः किं वा तीरे शरटः क्षीणः।
अथवा श्वपचो मलिनो दीनः तव न हि दूरे नृपतिकुलीनः॥ ११ ॥
भो भुवनेश्वरि पुण्ये धन्ये देवि द्रवमयि मुनिवरकन्ये।
गंगास्तवमिमममलं नित्यं पठति नरो यः स जयति सत्यम्॥ १२ ॥
येषां हृदये गंगा भक्तिः तेषां भवति सदा सुखमुक्तिः।
मधुराकन्ता पञ्झटिकाभिः परमानन्दकलित ललिताभिः॥ १३ ॥
गंगास्तोत्रमिदं भवसारं वांछितफलदम् विमलं सारम्।
शंकरसेवक शंकर रचितं पठति सुखीः तव इति च समाप्तम्॥ १४ ॥

## श्रीसरस्वतीस्तोत्रम्

या कुन्देन्दुषारहारधवला याशुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातुसरस्वतीभगवती निःशेष जाड्यापहा ॥१॥
आशासु राशीभवदङ्गवल्लीभासैव दासीकृतदुग्धसिन्धुम् ।
मन्दस्मितैर्निन्दितशारदेन्दुं वन्देऽरविन्दासनसुन्दरि त्वाम् ॥२॥
शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदास्माकं सन्निधिं सन्निधिं क्रियात् ॥३॥
सरस्वतीं च तां नौमि वागधिष्ठातृदेवताम् ।
देवत्वं प्रतिपद्यन्ते यदनुग्रहतो जनाः ॥४॥
पातु नो निकषग्रावा मतिहेम्नः सरस्वती ।
प्राज्ञेतरपरिच्छेदं वचसैव करोति या ॥५॥
शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं
वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम् ।
हस्ते स्फाटिकमालिकां च दधतीं पद्मासने संस्थितां
वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥६॥
वीणाधरे विपुलमङ्गलदानशीले भक्तार्तिनाशिनि विरञ्चिहरीशवन्द्ये ।
कीर्तिप्रदेऽखिलमनोरथदे महार्हे विद्याप्रदायिनि सरस्वती नौमि नित्यम् ॥७॥
श्वेताब्जपूर्णविमलासनसंस्थिते हे श्वेताम्बरावृतमनोहरञ्जगात्रे ।
उन्मनोज्ञसितपङ्कजमञ्जलास्ये विद्याप्रदायिनि सरस्वती नौमि नित्यम् ॥८॥
मातस्त्वदीयपदपङ्कजभक्तियुक्ता ये त्वां भजन्ति निखिलानपरान्विहाय ।
ते निर्जरत्वमिह यान्ति कलेवरेण भूवह्निवायुगगनाम्बुविनिर्तिन ॥९॥
मोहान्धकारभरिते हृदय मदीये मातः सदैव कुरु वासमुदारभावे ।
स्वीयाखिलावयवनिर्मलसुप्रभाभिः शीघ्रं विनाशय मनोगतमन्धकारम् ॥१०॥
ब्रह्म जगत् सृजति पालयतीन्दिरेशः शूम्भुर्विनाशयति देवि तव प्रभावैः ।
न स्यात्कृपा यदि तव प्रकटप्रभावे न स्युः
कथाञ्चदपि ते निजकार्यदक्षाः ॥११॥



लक्ष्मीर्मेधा धरा पुष्टिर्गौरी तुष्टिः प्रभा धृतिः ।
एताभिःपाहि तनुभिरष्टाभिर्मांसरस्वति ॥१२॥
सरस्वत्यै नमो नित्यं भद्रकाल्यै नमो नमः ।
वेदवेदान्तवेदाङ्गविद्यास्थानेभ्य एव च ॥१३॥
सरस्वती महाभागे विद्ये कमललोचने ।
विद्यारूपेविशालाक्षि विद्यांदेहि नमोऽस्तुते ॥१४॥
यदक्षरं पदं भ्रष्टं मात्राहीनं च यद्भवेत् ।
तत्सर्वं क्षम्यतां देवि प्रसीद परमे श्वरि ॥१५॥
卐 卐 卐 卐 卐

## श्रीभगवतीस्तोत्रम्

जय भगवति देवि नमो वरदे, जय पापविनाशिनि बहुफलदे ।
जय शुम्भनिशुम्भकपालधरे, प्रणमामि तु देवि नरार्तिहरे ॥१॥
जय चन्द्रदिवाकरनेत्रधरे, जय पावकभूषितवक्त्रवरे ।
जय भैरवदेहनिलीनपरे, जय अन्धकदैत्यविशोषकरे ॥२॥
जय महिषविमर्दिनि शूलकरे, जय लोकसमस्तकपापहरे ।
जय देवि पितामहविष्णुनते, जय भास्करशक्रशिरोऽवनते ॥३॥
जय षण्मुखसायुधईशनुते, जय सागरगामिनि शम्भुनुते ।
जय दुःखदरिद्रविनाशकरे, जय पुत्रकलत्रविवृद्धिकरे ॥४॥
जय देवि समस्तशरीरधरे, जय नाकविदर्शिनि दुःखहरे ।
जय व्याधिविनाशिनि मोक्ष करे, जय वाञ्छितदायिनि सिद्धिवरे ॥५॥
एतद्व्यासकृतं स्तोत्रं यः पठेन्नियतः शुचिः ।
गृहे वा शुद्धभावेन प्रीता भगवती सदा ॥६॥
इति व्यासकृतं श्रीभगवतीस्तोत्रं सम्पूर्णम् ।

卐 卐 卐

## अन्नपूर्णास्तोत्रम्

नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी
निर्धूताखिलघोरपावनकरीप्रत्यक्षमाहेश्वरी ।
प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥१॥

नानारत्नविचित्रभूषणकरी हेमाम्बराडम्बरी
मुक्ताहारविलम्बमानविलसद्वक्षोजकुम्भान्तरी ।
काश्मीरागुरुवासिता रुचिकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥२॥

योगानन्दकरी रिपुक्षयकरी धर्मार्थनिष्ठाकरी
चन्द्राकर्नलभासमानलहरीत्रैलोक्यरक्षाकरी ।
सर्वैश्वर्यसमस्तवाञ्छित काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥३॥

कैलासाचलकन्दरालयकरी गौरी उमा शङ्करीकौमारी
निगमार्थगोचरी ओङ्कारबीजाक्षरी
मोक्षद्वारकपाटपाटनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥४॥

दृश्यादृश्यप्रभूतपावनकरी ब्रह्माण्डभाण्डोदरी
लीलानाटकसूत्रभेदनकरी विज्ञानदीपाकुंरी।
श्रीविश्वेशमनःप्रसादनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥५॥

उर्वीसर्वजनेश्वरी भगवती मातान्नपूर्णेश्वरी
वेणीनीलसमानकुन्तलहरी नित्यान्नदानेश्वरी ।



सर्वानन्दकरी दशाशुभकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥६॥
आदिक्षान्तसमस्तवर्णनकरी शम्भोस्त्रिभावाकरी
काश्मीरा त्रिजनेश्वरी त्रिलहरी नित्याङ्कुरी शर्वरी ।
कामाकाङ्क्षकरी जनोदयकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥७॥

दर्वी स्वर्णविचित्ररत्नखचिता दक्षे करे संस्थिता
वामे स्वादुपयोधरी सहचरी सौभाग्यमाहेश्वरी ।
भक्ताभीष्टकरी दृशा शुभकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥८॥

चन्द्रार्कानलकोटिकोटिसदृशा चन्द्रांशुबिम्बाधरी
चन्द्रार्काग्निसमानकुण्डलधरी चन्द्रार्कवर्णेश्वरी ।
मालापुस्तकपाशकांकुशधरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥९॥

क्षत्रत्राणकरी महाभयकरी माता कृपासागरी
साक्षान्मोक्षकरी सदा शिवकरी विश्वेश्वरश्रीधरी ।
दक्षाक्रन्दकरी निरामयकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥१०॥

अन्नपूर्णे सदापूर्णे शङ्करप्राणवल्लभे ।
ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वती ॥११॥
मातामे पार्वतीदेवी पिता देवोमहेश्वरः
बान्धवाः शिवभक्ताश्च स्वदेशोभुवनत्रयम् ॥१२॥

॥ श्रीसूक्तम् ॥

हिरण्यवर्णां हरिणीं सुवर्णरजतस्त्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म अवाह ॥
तां म आवह जातवेदो लक्ष्मीमनपगमिनीम् ।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥
अश्वपूर्वां रथमध्यां हस्तिनाद-प्रबोधिनीम् ।
श्रियं देवीमुपह्वये श्रीर्मा देवीर्जुषताम् ॥
कां सोस्मितां हिरण्यप्राकारमार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥
चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मिनीमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥
आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥
उपैतु मां देवसखः कीर्तिश्च मणिना सह ।
प्रादुर्भूतोऽस्मिराष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातुमे ॥
क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।
अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥
गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीग्ं सर्वभूतानां तामिहोपह्वये श्रियम् ॥
मनसः काममाकूतिं वाचः सत्यमशीमहि ।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥
कर्दमेन प्रजाभूता मयि संभव कर्दम ।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥
आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।
नि चदेवीं मातरं श्रियं वासय मे कुले ।



आर्द्रांपुष्करिणींपुष्टिं पिङ्गलां पद्ममालिनीम् ।
चन्द्रां हिरण्यमयींलक्ष्मीं जातवेदो मऽआवह ॥
आर्द्रां यः करिणीं यष्टिंसुवर्णां हेममालिनीम् ।
सूर्यांहिरण्यमयीं लक्ष्मीं जातवेदोमऽआवह ।
तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् ॥
यः शुचिः प्रयतो भूत्वा जुहुयादाज्य मन्वहम् ।
श्रियः पञ्चदशर्चं च श्रीकामः सततंजपेत् ।

पद्मानने ऊरू पद्माक्षी पद्मसंभवे ।
त्वं मां भजस्व पद्माक्षी येन सौख्यं लभाम्यहम् ॥
अश्वदायी गोदायी धनदायी महाधने ।
धनं मे जुषतां देवि सर्वकामांश्च देहि मे ॥
पुत्रपौत्र धनं धान्यं हस्त्यश्वादिगवे रथम् ।
प्रजानां भवसि माता आयुष्मन्तं करोतु माम् ॥
धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः ।
धनमिन्द्रो बृहस्पतिर्वरुणं धनमश्नु ते ॥
वैनतेय सोमं पिब सोमं पिबतु वृत्रहा ।
सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः ॥
न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत्सदा ॥
वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः ।
रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि ॥
पद्मप्रिये पद्मिनि पद्महस्ते पद्मालये पद्मदलायताक्षि ।
विश्वप्रिये विष्णु मनोऽनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व ॥
या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी ।

गम्भीरा वर्तनाभिः स्तनभर नमिता शुभ्र वस्त्रोत्तरीया ॥
लक्ष्मीर्दिव्यै-र्गजेन्द्रैमणिगण खचितै-स्नापिता हेमकुम्भैः ।
नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्ययुक्त ॥
लक्ष्मीं क्षीरसमुद्र राजतनयां श्रीरङ्गधामेश्वरीम् ।
दासीभूतसमस्त देव वनितां लोकैक दीपांकुराम् ।
श्रीमन्मन्दकटाक्षलब्ध विभव ब्रह्मेन्द्रगङ्गाधरां ।
त्वां त्रैलोक्य कुटुम्बिनीं सरसिजां वन्दे मुकुन्दप्रियाम् ॥
सिद्धलक्ष्मी-र्मोक्षलक्ष्मी-र्जयलक्ष्मीस्सरस्वती ।
श्रीलक्ष्मीर्वर लक्ष्मीश्च प्रसन्ना मम सर्वदा ।
वरांकुशौ पाशमभीतिमुद्रां करैर्वहन्तीं कमलासनस्थाम् ।
बालार्क कोटि प्रतिभां त्रिणेत्रां भजेहमाद्यां जगदीश्वरीं त्वाम् ॥
सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थ साधिके ।
शरण्ये त्र्यम्बके देवि नारायणि नमोऽस्तु ते ॥
नारायणि नमोऽस्तु ते ॥ नारायणि नमोऽस्तु ते ॥
सरसिज-निलये सरोजहस्ते धवलतरांशुक गन्धमाल्यशोभे ।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥
विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् ।
विष्णोः प्रियसखीं देवीं नमाम्यच्युत-वल्लभाम् ॥

महालक्ष्मी च विद्महे विष्णुपत्नी च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥
श्री-वर्चस्यमायुष्यमारोग्यमाविधात् पवमानं महीयते । धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥ ऋणरोगादि-दारिद्र्य-पापक्षुदपमृम्यवः । भयशोकमनस्तापा नश्यन्तु मम सर्वदा ॥ श्रिये जात श्रिय आनिर्याय श्रियं वयो जनितृभ्यो दधातु । श्रियं वसाना अमृतत्वमायन् भजंति सद्यः संविता विदध्यून् ॥ श्रिय एवैनं तच्छ्रियामादधाति । सन्ततमृचा वषट्कृत्यं सन्धत्तं सन्धीयते प्रजया पशुभिः । य एवं वेद । ॐ महादेव्यै च विद्महे विष्णुपत्नी च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥
ॐ शान्तिः शान्तिः शान्तिः ॥



॥ श्रीः ॥
॥ देवीभुजंगस्तोत्रम् ॥

विरिञ्च्यादिभिः पञ्चभिर्लोकपालैःसमूढे महानन्दपीठे निषण्णम् ।
धनुर्बाणपाशाङ्कुशप्रोतहस्तंमहस्त्रैपुरं शंकराद्वैतमव्यात् ॥ १ ॥

यदन्नादिभिः पञ्चभिः कोशजालैःशिरःपक्षपुच्छात्मकैरन्तरन्तः ।
निगूढे महायोगपीठे निषण्णंपुरारेरथान्तःपुरं नौमि नित्यम् ॥ २ ॥

विरिञ्चादिरूपैः प्रपञ्चे विहृत्यस्वतन्त्रा यदा स्वात्मविश्रान्तिरेषा ।
तदा मानमातृप्रमेयातिरिक्तंपरानन्दमीडे भवानि त्वदीयम् ॥ ३ ॥

विनोदाय चैतन्यमेकं विभज्यद्विधा देवि जीवः शिवश्चेति नाम्ना ।
शिवस्यापि जीवत्वमापादयन्तीपुनर्जीवमेनं शिवं वा करोषि ॥ ४ ॥

समाकुञ्च्य मूलं हृदि न्यस्य वायुंमनो भ्रूबिलं प्रापयित्वा निवृत्ताः ।
ततः सच्चिदानन्दरूपे पदे तेभवन्त्यम्ब जीवाः शिवत्वेन केचित् ॥ ५ ॥

शरीरेऽतिकष्टे रिपौ पुत्रवर्गेसदाभीतिमूले कलत्रे धने वा ।
न कश्चिद्विरज्यत्यहो देवि चित्रंकथं त्वत्कटाक्शं विना तत्त्वबोधः ॥ ६ ॥

शरीरे धनेऽपत्यवर्गे कलत्रेविरक्तस्य सद्देशिकादिष्टबुद्धेः ।
यदाकस्मिकं ज्योतिरानन्दरूपंसमाधौ भवेत्तत्त्वमस्यम्ब सत्यम् ॥ ७ ॥

मृषान्यो मृषान्यः परो मिश्रमेनंपरः प्राकृतं चापरो बुद्धिमात्रम् ।
प्रपञ्चं मिमीते मुनीनां गणोऽयंतदेतत्त्वमेवेति न त्वां जहीमः ॥ ८ ॥

निवृत्तिः प्रतिष्ठा च विद्या च शान्तिस्तथा शान्त्यतीतेति पञ्चीकृताभिः ।
कलाभिः परे पञ्चविंशात्मिकाभिस्त्वमेकैव सेव्या शिवाभिन्नरूपा ॥ ९ ॥

अगाधेऽत्र संसारपङ्के निमग्नंकलत्रादिभारेण खिन्नं नितान्तम् ।
महामोहपाशौद्घबद्धं चिरान्मांसमुद्धर्तुमम्ब त्वमेकैव शक्ता ॥ १० ॥

समारभ्य मूलं गतो ब्रह्मचक्रंभवद्दिव्यचक्रेश्वरीधामभाजः ।

महासिद्धिसंङ्घातकल्पद्रुमाभा-नवाप्याम्ब नादानुपास्ते च योगी ॥ ११ ॥

गणेशैर्ग्रहैरम्ब नक्शत्रपङ्क्त्यातथा योगिनीराशिपीठैरभिन्नम् ।
महाकालमात्मानमामृश्य लोकंविधत्से कृतिं वा स्थितिं वा महेशि ॥ १२ ॥

लसत्तारहारामतिस्वच्छचेलांवहन्तीं करे पुस्तकं चाक्शमालाम् ।
शरच्चन्द्रकोटिप्रभाभासुरां त्वांसकृद्भावयन्भारतीवल्लभः स्यात् ॥ १३ ॥

समुद्यत्सहस्रार्कबिम्बाभवक्रांस्वभासैव सिन्दूरिताजाण्डकोटिम् ।
धनुर्बाणपाशाङ्कुशान्धारयन्तींस्मरन्तः स्मरं वापि संमोहयेयुः ॥ १४ ॥

मणिस्यूतताटङ्कशोणास्यबिम्बांहरित्पट्टवस्त्रां त्वगुल्लासिभूषाम् ।
हृदा भावयंस्तप्तहेमप्रभां त्वांश्रियो नाशयत्यम्ब चाञ्चल्यभावम् ॥ १५ ॥

महामन्त्रराजान्तबीजं पराख्यंस्वतो न्यस्तबिन्दु स्वयं न्यस्तहार्दम् ।
भवद्वक्त्रवक्शोजगुह्याभिधानंस्वरूपं सकृद्भावयेत्स त्वमेव ॥ १६ ॥

तथान्ये विकल्पेषु निर्विण्णचित्ता-स्तदेकं समाधाय बिन्दुत्रयं ते ।
परानन्दसंधानसिन्धौ निमग्नाःपुनर्गर्भरन्ध्रं न पश्यन्ति धीराः ॥ १७ ॥

त्वदुन्मेषलीलानुबन्धाधिकारा-न्विरिञ्च्यादिकांस्त्वद्गुणाम्भोधिबिन्दून् ।
भजन्तस्तितीर्षन्ति संसारसिन्धुंशिवे तावकीना सुसंभावनेयम् ॥ १८ ॥

कदा वा भवत्पादपोतेन तूर्णंभवाम्भोधिमुत्तीर्य पूर्णान्तरङ्गः ।
निमज्जन्तमेनं दुराशाविषाब्धौसमालोक्य लोकं कथं पर्युदास्से ॥ १९ ॥

कदावा हृषीकाणि साम्यं भजेयुःकदा वा न शत्रुर्न मित्रं भवानि ।
कदा वा दुराशाविषूचीविलोपःकदा वा मनो मे समूलं विनश्येत् ॥ २० ॥

नमोवाकमाशास्महे देवि युष्म-त्पदाम्भोजयुग्माय तिग्माय गौरि ।
विरिञ्च्यादिभास्वत्किरीटप्रतोली-प्रदीपायमानप्रभाभास्वराय ॥ २१ ॥

कचे चन्द्ररेखं कुचे तारहारंकरे स्वादुचापं शरे षट्पदौट्टम् ।
स्मरामि स्मरारेरभिप्रायमेकंमदाघूर्णनेत्रं मदीयं निधानम् ॥ २२ ॥
शरेष्वेव नासा धनुष्वेव जिह्वाजपापाटले लोचने ते स्वरूपे ।



त्वगेषा भवच्चन्द्रखण्डे श्रवो मेगुणे ते मनोवृत्तिरम्ब त्वयि स्यात् ॥ २३ ॥

जगत्कर्मधीरान्वचोधूतकीरान्कुचन्यस्तहारान्कृपासिन्धुपूरान् ।
भवाम्भोधिपारान्महापापदूरान्भजे वेदसाराञ्शिवप्रेमदारान् ॥ २४ ॥

सुधासिन्धुसारे चिदानन्दनीरेसमुत्फुल्लनीपे सुरत्रान्तरीपे ।
मणिव्यूहसाले स्थिते हैमशालेमनोजारिवामे निषण्णं मनो मे ॥ २५ ॥

दृगन्ते विलोला सुगन्धीषुमालाप्रपञ्चेन्द्रजाला विपत्सिन्धुकूला ।
मुनिस्वान्तशाला नमल्लोकपालाहृदि प्रेमलोलामृतस्वादुलीला ॥ २६ ॥

जगज्जालमेतत्त्वयैवाम्ब सृष्टंत्वमेवाद्य यासीन्द्रियैरर्थजालम् ।
त्वमेकैव कर्त्री त्वमेकैव भोक्त्रीन मे पुण्यपापे न मे बन्धमोक्शौ ॥ २७ ॥

इति प्रेमभारेण किञ्चिन्मयोक्तंन बुध्वैव तत्त्वं मदीयं त्वदीयं ।
विनोदाय बालस्य मौर्ख्यं हि मात-स्तदेतत्प्रलापस्तुतिं मे गृहाण ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्यश्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौदेवीभुजंगस्तोत्रम् संपूर्णम् ॥

॥ देवी प्रणव श्लोकी स्तुति ॥ Kalidasa

चेटी भवन्निखिल केटी कदम्ब वनवाटीषु नाकपटली
कोटीर चारुतर कोटीमणी किरण कोटीकरंजित पदा
पाटीर गन्धि कुच शाठी कवित्व परिपाटीमगाधिपसुताम्
घोटीकुलादधिक धाटी मुदारमुख वीटीर सेनतनुताम् ॥ १ ॥
द्वैपायन प्रभृति शापायुध त्रिदव सोपान धूळि चरणा
पापाप ह्रस्व मनु जापानुलीन जन तापाप नोद निपुणा
नीपालया सुरभि धूपालका दुरित कूपादुदन्चयतुमाम्
रूपाधिका शिखरि भूपाल वंशमणि दीपायिता भगवती ॥ २ ॥
याळी भिरात्त तनुराळी लसत्प्रिय कपाळीषु खेलति भवा
चूलीनकुल्य सित चूळी भराचरण धूळी लसन्मुणिगणा
याळी भृतिस्रवसिताळी दळम् वहति याळीकशोभि तिलका
साळी करोतु मम काळी मनः स्वपदनालीकसेवन विधौ ॥ ३ ॥
बालामृतांशु निभ फालामना गरुण चेलानितम्बफलके
कोलाहलक्शपित कालामराकुशल कीलाल शोषण रविः
स्थुलाकुचे जलद् नीलाकचे कलित लीलाकदम्ब विपिने
सूलायुध प्रणुति शैला विधात्र हृदि शैलाधिराज तनया ॥ ४ ॥
कम्बावती वस विडम्बागणेन नव तुम्बांग वीण सविधा
बिम्बाधराविनत शम्भायुधादि निकुरुम्बा कदम्बविपिने
अम्बाकुरंग मद जम्बाळरोचि रहलम्बाळका दिशतु मे
शम्भाहुळेय शशिबिम्बाभिराममुखि सम्भाधितस्तनभरा ॥ ५ ॥
न्यंकाकरेवपुषि कंकाळरक्तपुषि कंकादि पक्षि विषये
त्वंकामनामयसि किंकारणं हृदय पंकारिमेहि गिरिजाम्
शन्काशिलानिशित तंकायमान पद संकासमान सुमनो
झंकारि भृंगतति मंकानुपेत शशि संकासवक्र कमलाम् ॥ ६ ॥
दासायमान सुम हासा कदम्बवन वासाकुसुम्बसुमनो
वासाविपंचि कृत रासाविधूय मधुमासारविन्द मधुरा
कासारसूनतति भाषाभिराम तनुरासार शीत करुणा
नासमणि प्रवर वासा शिवातिमिर मासादयेतु परतिम् ॥ ७ ॥
झम्भारि कुम्भि पृथु कुम्भापहासि कुच सम्भाव्य हार लतिका
रम्भाकरीन्द्र कर डिम्भापहोरु गति दिम्बानुरन्जित पदा
शम्भावुदार परिकुम्भांकुरत्पुळक डम्भानुरागपिसुना
कम्भासुराभरण गुम्भासदादिशतु शम्भासुरप्रहरणा ॥ ८ ॥



दाक्शायनी दनुज शिक्शा विधौ वितत दीक्शा मनोहरगुणा
भिक्शाळिनोनटन वीक्शा विनोदमुखि दक्शाध्वरप्रहरणा
वीक्शाम् विदेहि मयि दक्शा स्वकीय जन पक्शाविपक्श विमुखी
यक्शेश सेवित निराक्शेप शक्ति जयलक्श्म्यावदानकलना ॥ ९ ॥
वन्दारु लोकवर सन्धायनी विमल कुन्दावदातरदना
बृन्दारबृन्दमणि बृन्दारविन्द मकरन्दाभिषिक्त चरणा
मन्दानिलाकलित मन्दारदामभिर मन्दारदाम मकुटा
मन्दाकिनी जवनबिन्दानवाजमरविन्दासना दिशतु मे ॥ १० ॥

卐 卐 卐

दुर्गास्तुतिः

कल्पान्ते मधुकैटभासुरपराभूतस्य धातुः स्तवैः
प्रीता पङ्कजलोचनस्य नयनान्निर्गत्य निद्रामयी ।
तौ युद्धे परिमोह्य ङ्घातितवती तेनैव विश्वेश्वरी
रोद्धुं ङ्घोरकृतान्तसैन्यमिह मे दुर्गेव दुर्गायताम् ॥ १ ॥

Being pleased by the praises sung by Brahma who was troubled by the asuras Madhu and Kaitabha at the end of a kalpa, She, the supreme Devi, supporter of the worlds, emerged out of MahaVishnu's eyes, who was in mystic slumber. Deluded by Mahamaya, the evil asuras, Madhu and Kaitabha, were then slayed by MahaVishnu. Let Goddess Durga become a fort for me to stop the terrible army of kRitAnta, the god of death.

त्रैलोक्ये महिषासुरप्रमथिते संभूय संचिन्ततां
देवानामपि सा विनिर्मितवपुस्तैर्दत्तभूषायुधा ।
उच्चैर्नादयुतैर्महासुरबलैरारब्धयुद्धोत्सवा
रोद्धुं ङ्घोरकृतान्तसैन्यमिह मे दुर्गेव दुर्गायताम् ॥ २ ॥

When Mahishasura was creating havoc in all the three worlds, the devas got together and requested Brahma, Siva and Vishnu for help. Then Goddess Durga was created and weapons were given by them. Let Goddess Durga, whose battle attire is accompanied by the loud cries of the devas, become a fort for me to stop the terrible army of kRitAnta, the god of death.

निःश्वासप्रभवैश्च भूतनिवहैर्विध्वस्तदैत्योत्करा
हत्वा चिक्षुरमुत्क्षपय्य समरे सिंहेन तं चामरम् ।
आशूदग्रकरालबाष्कलबिडालादीनरीन् क्षिण्वती
रोद्धुं ङ्कोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ ३ ॥

The sighs heaved by the Goddess turned into battallions and with them she killed the army of asuras. Then She killed Chikshura, the general of the asura army. Her lion jumped on Chamara, another able member of the asuras and killed him in a battle. Within moments She also destroyed the enemies udagra, karAla, bAShkala, biDAla and others. Let Goddess Durga become a fort for me to stop the terrible army of kRitAnta, the god of death.

प्राप्तं क्षोभितविश्वमाशु महिषं संनाशयन्ती ततः
सिंहीभूतमथो नराकृतिमिभाकारं लुलायाकृतिम् ।
आक्राम्याङ्घ्रितलेन निर्गतममुं भूयोऽसिना छिन्दती
रोद्धुं ङ्कोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ ४ ॥

When Mahisha who shook the entire world approached the Devi, She destroyed him. But, he then took the form of a lion, then came in the form of man, elephant and back to his original form. She then attacked him with her foot and cut him up with Her sword. Let Goddess Durga become a fort for me to stop the terrible army of kRitAnta, the god of death.

निःशेषामरशक्तिरूपिणि शिवे माये महाविक्रमे
श्रीवागादिविभूतिरूपिणि रणे विद्युत्कृपानुग्रहे ।
शूलाद्यैरपि पालयेति दिविजैर्नीतादिशन्ती वरं
रोद्धुं ङ्कोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ ५ ॥

"You are the personification of the power of the entire host of devas, auspicious one, mAya - the consort of the parabrahman, brave one, in a battle You are the form of Lakshmi, Sarasvati and other manifestations, yet, immediately like a lightning, You grace people due to compassion, protect us with trident and other weapons". Thus when the devas praised You, You gave them boons. Let that Goddess Durga become a fort for me to stop the terrible army of kRitAnta, the god of death.

दृप्यच्छुम्भनिशुम्भविक्रमचिरक्लिष्टैः सुरेन्द्रैः स्तुता
पार्वत्या वपुषोऽवतीर्य ललिताकारा हिमाद्रेस्तटे ।
डोलाकेलिविमोहितत्रिभुवना सा चण्डमुण्डेक्षिता
रोद्धुं ङ्कोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ ६ ॥

Praised by the devas who were suffering because of their defeat at the hands of the arrogant shumbha and nishumbha, a gentle form emerged out of pArvati at the slopes of Himalayas. Sportingly She attracted all the three worlds and was seen by chaNDa and muNDa. Let that Goddess Durga become a fort for me to stop the terrible army of kRitAnta, the god of death.

चण्डावेदितरूपजातमदनस्तम्भेन शुम्भेन च
द्राग् दूते प्रहिते नियुद्धविजयी भर्ता ममेत्यूचिषी ।
युद्धेच्छुं किल धूम्रलोचनमथो सैन्यान्वितं धून्वती
रोद्धुं ङ्कोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ ७ ॥

Being informed by chaNDa of the Devi's beautiful form, shumbha became desirous of attaining her and immediately sent a messenger. She sent him back with the message that only the one who defeats her in a battle can become her husband. Enraged by her answer, shumbha sent dhUmralochana, who wanted to fight. Devi destroyed dhUmralochana along with his army. Let that Goddess Durga become a fort for me to stop the terrible army of kRitAnta, the god of death.

चण्डे मुण्डयते समेयुषि बलैः कालीमलीकान्तरात्
सृष्ट्वा भक्षितसैन्यशस्त्रकुलया तौ ङ्कातयन्ती तया ।

प्राप्ते शुम्भबले च केसरितुनः काली रवोद्घोषिनी
रोद्धुं ङ्घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ ८ ॥

When chaNDa and muNDa came with their forces, She created kAli from her forehead. kAli then destroyed the army and its weapons and then killed chaNDa and muNDa. Later when Shumba's army approached, kAli expressed her anger by roaring aloud. Let that Goddess Durga become a fort for me to stop the terrible army of kRitAnta, the god of death.

ब्रह्माण्डादिषु संगतासु शिवदूतीं च स्वशक्तिं तदा
सृष्ट्वा तत्प्रहितेन्दुमौलिवचसा दैत्यैः प्रवृत्ते रणे ।
क्रुध्यन्मातृणार्दितं रिपुबलं दृष्ट्वा प्रहृष्टाशया
रोद्धुं ङ्घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ ९ ॥

Then shivadUtI (one who sent Siva as messenger) - her own power was created from combining the powers of all the devas of the brahmANDa. Then She was called to battle by the asuras who were incited by the words of shiva (lord with the moon on his head) who was sent by Her. She became delighted on seeing the army being attacked by the angry mothers - the manifestations of the devas' powers. Let that Goddess Durga become a fort for me to stop the terrible army of kRitAnta, the god of death.

प्राप्तं संयति रक्तबीजमसुरं मातृप्रहारोद्गल-
द्रक्तोद्भूतभटौट्टपूर्णभुवनं भीतिप्रदं पश्यताम् ।
काल्या तत्क्षणपीतनष्टरुधिरं शस्त्रोत्करौर्निघ्नती
रोद्धुं ङ्घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ १० ॥

The devas next saw the asura raktabIja, who came to the battlefield and who created fear by filling earth with warriors (of his kind) who sprung from his blood that oozed out of him when he was struck by the shaktis. Then as and when Devi attacked raktabIja, kAli drank his blood and ultimately he perished. Let



that Goddess Durga become a fort for me to stop the terrible army of kRitAnta, the god of death.

ङ्घोरे शुम्भनिशुम्भयोरथ रणारम्भे निशुम्भासुरं
खड्गाद्यैः कृतयुद्धमात्तपरशुं संमोह्य बाणोत्करैः ।
शुम्भं शक्तिशरौट्टभीषणरणं शूलार्दितं तन्वती
रोद्धुं ङ्घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ ११ ॥

Next was the terrible battle with shumbha and nishumbha. nishumba who fought with an axe and arrows was struck unconscious by Devi with a sword. Then with the trident She struck shumbha who was fighting ferociously with 'shakti' - indra's weapon and with arrows. Let that Goddess Durga become a fort for me to stop the terrible army of kRitAnta, the god of death.

भूयः प्राप्तनिशुम्भमुक्तमभितश्चक्रायुधं छिन्दती
खड्गाच्छिन्नगदं सशूलमथ तं शूलेन भित्त्वोरसि ।
वक्षोनिर्गतमन्यदस्य च वपुः खड्गेन निष्कृन्तती
रोद्धुं ङ्घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ १२ ॥

Again, nishumbha sent forth many chakras at the Devi which She broke. She broke his gada with Her sword and then tore his chest with Her trident. Another form of his came from his chest and was immediately killed by Devi with her sword. Let that Goddess Durga become a fort for me to stop the terrible army of kRitAnta, the god of death.

पञ्चास्येन च मातृभिश्च मथिते सैन्ये समभ्येयुषः
शुम्भस्यान्यबलावलम्बवचसा देवीर्विलाय्य स्वयम् ।
शस्त्रास्त्रोत्करभीषणं चिरतरं तेनाहवं तन्वती
रोद्धुं ङ्घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ १३ ॥

When the different shaktis and Her lion were fighting the asuras, shumbha accused the devi of depending on another's strenth. So

She merged all other manifestations into Herself and fought for a long with shumba who fought with many kinds of weapons (shastra) and astras (arrows released after invoking a mantra). Let that Goddess Durga become a fort for me to stop the terrible army of kRitAnta, the god of death.

छिन्नास्त्रेण तलप्रहारमथितेनानेन धृत्वा रुषा
व्योमान्तं गमिता नियुद्धमधिकं कृत्वाथ निष्पात्य तम् ।
शूलेन प्रविदार्य सर्वभुवनं निर्व्याकुलं कुर्वती
रोद्धुं ङ्घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ १४ ॥

shumba's weapons were destroyed and he was hit by Devi with her palm. An angry shumbha took Her to the sky and fought fiercely. Devi then decided that She had fought enough and killed him with Her trident and made the earth free of distress. Let that Goddess Durga become a fort for me to stop the terrible army of kRitAnta, the god of death.

आपन्नार्तिहरे प्रसीद शुभदे विश्वोसि नारायणि
ब्रह्माण्यादितनो प्रपालय भयाच्छूलादिदृण्टादिभिः ।
रोगादीञ्जहि सर्वदायिनि वरं देहीति दैवैः स्तुता
रोद्धुं ङ्घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ १५ ॥

Remover of the miseries of those who are distressed, Bestower of auspicious things, be pleased. nArAyaNi, You are the entire world. brahmANi, the first being, protect us from fear with Your weapons like trident and others and kill all diseases. O Giver of everything, give us boons." Thus She was praised by the devas. Let that Goddess Durga become a fort for me to stop the terrible army of kRitAnta, the god of death.

भूयश्चापि तदा तदा रिपुबलं हन्तास्म्यहं चिन्तिता
मन्माहात्म्यकथापरानपि सदा सर्वत्र रक्षाम्यहम् ।
तेषां चाभिमतं ददाम्यखिलमित्युक्त्वा ततोऽन्तर्हिता
रोद्धुं ङ्घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ १६ ॥



Whenever I am remembered, I will again kill the host of asuras. Always and everywhere I will protect those who are involved in the stories describing My greatness. And I will give everything that they wish for." So saying She disappeared. Let that Goddess Durga become a fort for me to stop the terrible army of kRitAnta, the god of death.

माहात्म्यं च सुमेधसानुकथितं श्रुत्वा महीभृद्विशोः
सह्याद्रौ विहितात्रिवर्षतपसोः प्रत्यक्षतामेयुषी ।
भूभर्त्रे ददती पुनर्मनुपदं वैश्याय बोधप्रदा
रोद्धुं ङ्घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ १७ ॥

Hearing the greatness of Devi as related by the RiShi sumedhas, king suratha performed tapas on the mountain sahyAdri for three years and got a vision of the Goddess. She gave his kingdom back to suratha and and the boon that he will be born to Lord sUrya and his wife savarNA and will be known as sAvarNi and become the next manu. She also gave the boon of self-realisation to the vaishya. Let that Goddess Durga become a fort for me to stop the terrible army of kRitAnta, the god of death.

श्रीदुर्गास्तुतिपद्यसप्तदशकं नित्यं पठन् मानवो
मुक्त्वा मृत्युभयं विहाय विपदं लब्ध्वाखिलं काङ्क्षितम् ।
मुक्तिं चापि लभते मुक्तिनिलये देव्याः कृपागौरवा-
न्निःशेषं फलमश्नुवीत गिरिजामाहात्म्यपाठोद्भवम् ॥ १८ ॥

By reading the seventeen verses of "shrIdurgAsrutI" daily, man is freed from fear of death, leaves behind difficulties, gets all that he wishes for and attains liberty. And in that state of liberation, due to the grace of the Goddess, he enjoys in its entirety the fruit that arises out of reading the greatness of Goddess girijA.

卐 卐 卐

ॐ रं श्रीं ह्रीं धं धनदे रतिप्रिये स्वाहा ।।
क्लीं १

संकल्प अस्य श्री धनदेश्वरी मंत्रस्य कुबेर ऋषिः पंक्तिश्छन्दः श्री धनदेश्वरी देवतां धं बीजम् स्वाहा शक्तिः श्रीं कीलकम् श्री धनदेश्वरी प्रसाद सिद्ध्ये समस्त दारिद्र्यनाशाय श्री धनदेश्वरी मंत्रजपे विनियोगः ।

ऋष्यादिन्यास
कुबेर ऋषये नमः शिरसि
पंक्तिश्छन्दसे नमः मुखे
धनदेश्वरी देवतायै नमः हृदये
धं बीजाय नमः गुह्ये
स्वाहा शक्तये नमः पादयोः
श्रीं कीलकाय नमः नाभौ
विनियोगाय नमः सर्वांगे

करन्यास
श्रां अंगुष्ठाभ्यां नमः
श्रीं तर्जनीभ्यां नमः
श्रूं मध्यमाभ्यां नमः
श्रैं अनामिकाभ्यां नमः
श्रौं कनिष्ठकाभ्यां नमः
श्रः करतलकरपृष्ठाभ्यां नमः

हृदयादि न्यास
श्रां हृदयाय नमः
श्रीं शिरसे स्वाहा
श्रूं शिखायै वषट्
श्रैं कवचाय हुम्
श्रौं नेत्रत्रयाय वौषट्
श्रः अस्त्राय फट्

मंत्रवर्ण न्यास
ॐ नमः शिरसि
रं नमः मुखे,
श्रीं नमः नमो दक्षिणनेत्रे
ह्रीं नमः वामनेत्रे
धं नमः दक्षिणकर्णे
धं नमः वामकर्णे
नं नमः दक्षिण नासापुटे
दें नमः वामनासापुटे
रं नमः हृदये
तिं नमः दक्षिणस्तने
प्रिं नमः वामस्तने
यें नमः नाभौ
स्वां नमः गुह्ये
हां नमः पादयोः

पदन्यास
ॐ नमः मस्तके
रं नमः मुखे
श्रीं नमः हृदये
ह्रीं नमः कट्याम्
धं नमः हस्तयोः
धनदे नमः गुदे
रतिप्रिये नमः लिंगे
स्वाहा नमः पादयोः



कवचन्यास
धनदायै नमः शिरसि
मंगलायै नमः ललाटे
दुर्गायै नमः भ्रुर्वोमध्ये
त्रिनेत्रायै नमः दक्षिणनेत्रे
चंचलायै नमः वामनेत्रे
त्वरितायै नमः दक्षिण कर्णे
मंजुघोषायै नमः वामकर्णे
सुगंधायै नमः दक्षिण नासापुटे
पद्मायै नमः वामनासापुटे
वाराह्यै नमः ऊर्ध्वोष्ठे
महामायायै नमः अधरोष्ठे
करालभैरव्यै नमः मुखे
सुन्दर्यै नमः दन्तजाले
सरस्वत्यै नमः जिह्वायाम्
रुद्राण्यै नमः चिबुके
चामर्यै नमः कण्ठे
वज्रायै नमः कण्ठपृष्ठे
हरिप्रियायै नमः दक्षस्कन्धे
कमलायै नमः वामस्कन्धे
वरदायै नमः दक्षिणहस्ते
अभयायै नमः वामहस्ते
सुपट्टिकायै नमः दक्षिणांगुलीषु
उमाय नमः वामांगुलीषु
महालक्ष्म्यै नमः हृदये
कामदायै नमः स्तनयोः
क्षुधायै नमः उदरे
महाबलायै नमः कट्याम्
धनुर्धरायै नमः पृष्ठे
काम प्रियायै नमः लिंगे
गुह्येश्वर्यै नमः गुदे
चपलायै नमः ऊर्वो
लीलायै नमः जानुनोः
सर्वशक्तयै नमः जंघयोः
भ्रामर्यै नमः पादयोः
सर्वेश्वर्यै नमः सर्वांगे

दिङ्न्यास
ब्राह्म्यै नमः पूर्वे
माहेश्वर्यै नमः दक्षिणे
कौमार्यै नमः पश्चिमे
वैष्णव्यै नमः उत्तरे
वाराह्यै नमः ईशान्याम्
चामुण्डायै नमः आग्नेय्याम्
कौबेर्यै नमः नैत्रृत्याम्
वायव्यै नमः वायव्याम्
ब्रह्मायै नमः ऊर्ध्वम्
अनन्तायै नमः अधः

ध्यान

हेमप्राकारमध्ये
सुरविटपितटेरक्तपीठाधिरूढ़ां ।
ध्यायेत्तां यक्षिणीं वै
परिमलकुसुमोद्भासिधम्मिल्लभाराम् ।।
पीनोत्तुंगस्तनाढ्यां कुवलयनयनां
रत्नकांचीं कराभ्यां ।
भ्राम्यद्रक्तोत्पलाभ्यां नवरविवसनां
रक्तभूषांगरागाम् ।।

## यंत्र पूजा विधि

ह्रीं आधारशक्त्ये नमः ह्रीं सर्वशक्तिमलासनाय नमः

ॐ सविन्मय परे देवि परामृतरसप्तिये । अनुज्ञा देहि धनदे परिवारार्चनाय मे ।।

आवरण १

१. श्रां हृदयाय नमः हृदय श्री पादुकां पूजयामि तर्पयामि नमः

२. श्रीं शिरसे स्वाहा शिरः श्री पादुकां पूजयामि तर्पयामि नमः

३. श्रूं शिखायै वषट् शिखा श्री पादुकां पूजयामि तर्पयामि नमः

४. श्रैं कवचाय हुम कवच श्री पादुकां पूजयामि तर्पयामि नमः

५. श्रौं नेत्रत्रयाय वौषट् नेत्रत्रय श्री पादुकां पूजयामि तर्पयामि नमः

६. श्रः अस्त्राय फट् अस्त्र श्री पादुकां पूजयामि तर्पयामि नमः

अभीष्ट सिद्धिं मे देहि शरणागत वत्सले। भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ।।

आवरण २

७. महालक्ष्म्यै नमः महालक्ष्मी श्री पादुकां पूजयामि तर्पयामि नमः

८. पद्मायै नमः पद्मा श्री पादुकां पूजयामि तर्पयामि नमः

९. श्रियै नमः श्री श्री पादुकां पूजयामि तर्पामि नमः

१०. हरिप्रियायै नमः हरिप्रिया श्री पादुकां पूजयामि तर्पयामि नमः

११. हरायै नमः हर श्री पादुकां पूजयामि तर्पयामि नमः

१२. पद्मप्रियायै नमः पद्मप्रिया श्री पादुका पूजयामि तर्पयामि नमः

१३. कमलायै नमः कमला श्री पादुकां पूजयामि तर्पयामि नमः

१४. अब्जाये नमः अब्जा श्री पादुकां पूजयामि तर्पयामि नमः

१५. चंचलायै नमः चंचला श्री पादुकां पूजयामि तर्पयामि नमः

१६. लोलायै नमः लोला श्री पादुकां पूजयामि तर्पयामि नमः

अभीष्ट सिद्धिं मे देहि शरणागत वत्सले । भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ।।

चतुष्कोण में दश दिक्पालों और उनके आयुध

इन्द्र-अग्नि-यम-निऋति-वरुण-वायु-कुबेर-ईशान-ब्राह्मण-अनन्त

वज्र-शक्ति-दण्ड-खड्ग-पाश-अंकुश-गदा-त्रिशूल-पद्म-चक्र



## कवच

### विनियोग

अस्य श्री धनदा यक्षिणी कवचस्य कुबेर ऋषिः पंक्तिश्छन्दः श्री धनदा देवता रं बीजम् श्रीं शक्तिः ह्रीं कीलकम् श्री धनदेश्वरी प्रसाद सिद्धये मम दारिद्र्यनाशाय श्री धनदा कवच पाठे विनियोगः ।

### ऋष्यादिन्यास

ॐ ह्रां कुबेर ऋषये नमः शिरसि, ह्रीं पंक्तिश्छन्दसे नमः मुखे, ह्रूं धनदा देवतायै नमः हृदये, ह्रैं रं बीजाय नमः गुह्ये, ह्रौं श्रीं शक्तयै नमः पादयोः, ह्रः ह्रीं कीलकाय नमः नाभौ, ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः विनियोगाय नमः सर्वांगे ।।

### करन्यास

ह्रां अंगुष्ठाभ्यां नमः, ह्रीं तर्जनीभ्यां नमः, ह्रूं मध्यमाभ्यां नमः, ह्रैं अनामिकाभ्यां नमः, ह्रौं कनिष्ठकाभ्यां नमः, ह्रः करतलकरपृष्ठाभ्यां नमः ।

### हृदयादि न्यास

ह्रां हृदयाय नमः, ह्रीं शिरसे स्वाहा, ह्रूं शिखायै वषट्, ह्रैं कवचाय हुम, ह्रौं नेत्रत्रयाय वषट्, ह्रः अस्त्राय फट् ।

### ध्यान

कुंकमोदरगर्भाभां किंचिद्यौवनशालिनीम् ।
मृणालकोमलभुजां केयूरांगदभूषिताम् ।।
नीलोत्पलदृशं किंचिदुद्यत्कुचविराजिताम् ।
भजेऽहं भ्राम्यकमलवराभय समन्विताम् ।।
तुलाकोटिपरिभ्रान्त पादपद्मद्वयान्विताम् ।
माणिक्यहार मुकुट कुण्डलादिविभूषिताक ।।
रक्तवस्त्रपरीधानां ताम्बूलाधरपल्लवाम् ।
हेमप्राकारमध्यस्थां रत्न सिंहासने स्थिताम् ।।

## कवच

तत्तुर्य रक्षयेत्सर्व शरीरं देवि सर्वतः ।
माया चक्षुर्भुजौ पातु पदौ रक्षेद्रतिप्रिया ॥
वाह्निजाया पातु लिंगमंत्रः सर्वत्र रक्षतु ।
धनदा सर्वदा रक्षेत्पथि दुर्गे यमालये ॥
मंजुघोषा सदा पातु पृष्ठ जानुयुगे बलम् ।
सुन्दरी दन्तजालं च कण्ठ जालं च चामरी ॥
भ्रामरी भ्रमणं रक्षेद् दशदिक्षु सुपाठिका ।
करालभैरवी पातु वदनं श्रुति नेत्रयोः ॥
त्रिनेत्रा त्वरिता पातु मदंगं सर्वसंकटे ।
ओष्ठाधरौ महामाया रसनां चोरुदण्डयोः ॥
अंगुलीषु तथा शक्तिर्जघनं चैव चण्डिका ।
इन्द्रणी पातु मे पूर्वे दक्षिणे तु महेश्वरी ॥
कौमारी पश्चिमे पातु वैष्णवी चोत्तरेवतु ।
ऐशान्यां पातु वाराही चामुण्डा वह्निकोणके ॥
कौबेरी नैऋते पातु वायव्यां दुःखहारिणी ।
ऊर्ध्वं ब्राह्मी सदा पातु अधो दुर्गा सदावतु ॥
ज्ञात्वा तु कवचं दिव्यं सुखेन सर्वसिद्धिकृत् ।
ध्यायेत्कल्पतरोर्मूले देवि त्वां धनदायिकाम् ॥
रत्नापात्रद्वयं चाग्रे दायिनीं निधिवर्षिणीम् ।
अन्नपूर्णावराहाभ्यां श्रीभूमिं संहितां जपेत् ॥
अन्यहस्तगतं छत्रं कुबेरश्चामरद्वयम् ।
भविष्यति महादेव्याः मंत्रैः सर्वैः समृद्धिमान् ॥
कदाचिद्यः पठेद् धीमान्न वै रोगो भवेद् ध्रुवम् ।
अपुत्रो लभतेपुत्रं सर्व विद्या सुशोभनम् ॥



## धनदायक्षिणी स्तोत्र

### विनियोग

अस्य श्री धनदास्तोत्र मंत्रस्य कुब्रेर ऋषिः पंक्तिश्छन्दः श्री धनदेश्वरी देवता धं बीजम् स्वाहा शक्तिः श्रीं कीलकम् श्री धनदेश्वरी प्रसाद सिद्धये मम दारिद्र्यनाशाय स्तोत्र मंत्र जपे विनियोगः ।

### न्यास

कुबेर ऋषये नमः शिरसि, पक्तिंश्छन्दसे नमः मुखे, श्रीधनदेश्वरी देवनायै नमः हृदये, धं बीजाय नमः गुह्यै स्वाहा शक्तये नमः पादयोः, श्रीं कीलकाय नमः कर सम्पुटे दारिद्र्यनाशाय विनियोगाय नमः सर्वांगे ।

### करन्यास

श्रां अंगुष्ठाभ्यां नमः, श्रीं तर्जनीभ्यां नमः, श्रूं मध्यमाभ्यां नमः, श्रैं अनामिकाभ्यां नमः, श्रौं कनिष्ठकाभ्यां नमः, श्रः करतलकरपृष्ठाभ्यां नमः ।

### हृदयादि न्यास

श्रां हृदयाय नमः, श्रीं शिरसे स्वाहा, श्रूं शिखायै वषट्, श्रैं कवचाय हुम, श्रौं नेत्रत्रयाय वौषट्, श्रः अस्त्राय फट् ।

### ध्यान

हेमप्राकारमध्ये सुरविटपितले रत्नपीठाधिरूढां
यक्षीं बालां स्मरामः परिमलकुसुमोद्भासिधम्मिलभाराम् ।
पीनोत्तुंगस्तनाढयां कुवलयनयनां रत्नकांची कराभ्याम् ।
भ्राम्यद्रक्तोत्पलाभां नवरविवसनां रक्तभूषांगरागाम् ॥

### मूलस्तोत्र

भूभवां संभवांभूत्यै पंक्तिकल्पलतां शुभाम् ।
प्रार्थयेत्तांस्तथाकामान्कामधेनुस्वरूपिणीम् ॥
धरामर प्रिये पुण्ये धन्ये धनदपूजिते ।
सुधनं धार्मिकं देहि यजनाय सुसत्वरम् ॥
धर्मदे धनदे देवि दानदे तु दयाकरे ।
त्वं प्रसीद महेशानि यदर्थं प्रार्थयाम्यहम् ॥
रम्ये रुद्रप्रिये रूपे रमारूपे रविप्रिये ।

शशिप्रभमनोमूर्त्ते प्रसीद प्रणते मयि ॥
आरक्त चरणांभोजे सिद्धसर्वांगभूषिते ।
दिव्याम्बरधरे दिव्ये दिव्यमाल्योपशोभिते ॥
समस्तगुणसम्पन्ने सर्वलक्षणलक्षिते ।
जातरूपमणीन्द्वादि भूषिते भूमिभूषिते ॥
शरच्चन्द्रमुखे नीले नीलनीरजलोचने ।
चंचरीकं च भूवासं श्रीहारि कुटिलालके ॥
मत्ते भगवति मातः कलकंठरवामृते ।
हासावलोकनैर्दिव्यैः भक्तचिन्तापहारिके ॥
रूप लावण्यतारुण्यै कारुण्यामृतभाजने ।
कणत्कंकणमंजीर लसल्लीसाकराम्बुजे ॥
रुद्र प्रकाशिते सत्त्वे धर्माधारे दयालये ।
प्रयच्छ यजनायैव धनं धर्मैकशोधनम् ।
मातर्मे मा विलम्बेन दिशस्व जगदम्बिके ।
कृपया करुणासारे प्रार्थितं पूरयाशु मे ॥
वसुधे वसुधारूपे वसुवासववन्दिते ।
धनदे यजनायैव वरदे वरदा भव ॥
ब्रह्मण्ये ब्राह्मणे पूज्ये पार्वती शिवशंकरे ।
श्रीकरे शंकरे श्रीदे प्रसीद मयि किंकरे ॥
स्तोत्रं दारिद्र्ययदावार्तिशमनं च धनप्रदम् ।
पार्वतीश प्रसादेन सुरेशशंकरेरितम् ॥
श्रद्धया ये पठिष्यन्ति पाठयिष्यन्ति भक्तितः ।
सहस्रमयतं लक्षं धनलाभो भवेद् ध्रुवम् ॥

卐 卐 卐 卐 卐



## मातृका न्यास

ॐ अस्य श्री मातृका मन्त्रस्य ब्रह्मऋषिर्गायत्रीच्छन्दो मातृका सरस्वती देवता व्यंजनानि बीजानि स्वराः शक्तयः अव्यक्त कीलकम् लिपिन्यासे विनियोगः ।

अंगन्यास

ॐ ब्रह्मणे ऋषये नमः शिरसि ।
ॐ गायत्र्यै छन्दसे नमो मुखे ।
ॐ मातृकायै सरस्वती देवतायै नमो हृदि ।
ॐ हतभ्यो बीजेभ्यो नमो गुह्ये ।
ॐ स्वरेभ्यः शक्तिभ्यो नमः पादयोः ।
ॐ अव्यक्ताय कीलकाय नमः सर्वाङ्गे ।

करन्यास

ॐ अं कं खं गं घं ङं आं अंगुष्ठाभ्यां नमः ।
ॐ इं चं छं जं झं ञं ईं तर्जनीभ्या स्वाहा ।
ॐ उं टं ठं डं ढं णं ॐ मध्यमाभ्यां वषट् ।
ॐ एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः हुम् ।
ॐ ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां वौषट् ।
ॐ अं यं रं लं वं शं षं सं हं लं क्षं करतलकरपृष्ठाभ्यां फट् ।

हृदयादि न्यास

ॐ अं कं खं गं घं ङं आं हृदयाय नमः ।
ॐ इं चं छं जं झं ञं शिरसे स्वाहा ।
ॐ उं टं ठं डं ढं णं ॐ शिखायै वषट् ।
ॐ एं तं थं दं धं नं ऐं कवचाय हुम् ।
ॐ ओं पं फं बं भं मं औं नेत्रत्रयाय वौषट् ।
ॐ अं यं रं लं वं शं षं सं हं लं क्षं अस्त्राय फट् ।

शरत्पूर्णेन्दु शुभ्रां सकललिपिमयीं लोलरक्तत्रिनेत्रां,
शुक्लालङ्कारभासां शशिमुकुटजटाभारहारप्रदीप्तां ।
विद्याभ्रक्पूर्णकुम्भान् वरमपिदधतीं शुद्धपट्टाम्बराढ्यां,
वाग्देवीं पद्मवक्त्रां कुचभरनमितां चिन्तयेत् साधकेन्द्रः ॥

## अन्तर्मातृका न्यास क्रम

ॐ अं आं इं ईं उं ऊं ऋं लृं एं ऐं ओं औं अं अः नमः इतिषोडशदले विशुद्धे कण्ठे ।

ॐ कं खं गं घं ङं चं छं जं झं ञं टं ठं नमः इति द्वादशाक्षरे अनाहतै हृदि ।

ॐ डं ढं णं तं थं दं धं नं पं फं नमः इति दशाक्षरे मणिपूरे नाभौ ।

ॐ बं भं मं यं रं लं नमः षडस्त्रे स्वाधिष्ठाने लिङ्गमध्ये ।

ॐ वं शं सं नमः चतुरस्त्रे स्वाधिष्ठाने गुद मध्ये ।

ॐ हं क्षं नमः द्विदले आज्ञाचक्रे भ्रू मध्ये ।

## बहिर्मातृका न्यास क्रम

ॐ अं नमः शिरसि । ॐ आं नमः ललाटे । ॐ इं नमः दक्षिण नेत्रे । ॐ ईं नमः वामनेत्रे । ॐ उं नमः दक्षिण कर्णे । ॐ ऊं नमः वाम कर्णे । ॐ ऋं नमः दक्षिण नासापुटे । ॐ ॠ नमः वाम नासापुटे । ॐ लृं नमः दक्षिण कपोले । ॐ लॄं नमः वाम कपोले । ॐ एं नमः ऊर्ध्व ओष्ठे । ॐ ऐं नमः अधरोष्ठे । ॐ ओं नमः ऊर्ध्वदन्तपंक्तौ। ॐ औं नमः अधोदन्तपंक्तौ । ॐ अं नमः मूर्ध्नि । ॐ अः नमः मुख वृत्ते ।

ॐ कं नमः दक्षबाहु । ॐ खं नमः दक्ष कूर्परे । ॐ गं नमः दक्षिण मणिबन्धे । ॐ घं नमः दक्षिण हस्ताङ्गुलिमूले । ॐ ङं नमः दक्षिण हस्ताङ्गुलिअग्रे ।

ॐ चं नमः वामबाहु । ॐ छं नमः वामहस्तकूर्परे । ॐ जं नमः वामहस्त मणिबन्धे । ॐ झं नमः वामहस्ताङ्गुलिमूले । ॐ ञं नमः वामहस्ताङ्गुलिअग्रे । ॐ टं नमः दक्षपाद मूले । ॐ ढं नमः दक्षजानुनि । ॐ डं नमः दक्षगुल्फे । ॐ ढं नमः दक्षपादङ्गुलिमूले । ॐ णं नमः दक्षपादाङ्गुल्यग्रे । ॐ तं नमः वामपादाङ्गुलिमूले। ॐ थं नमः वामजानुनि । ॐ दं नमः वामगुल्फे । ॐ धं नमः वामापादाङ्गुलिमूले । ॐ नं नमः वामपादाङ्गुल्यग्रे । ॐ पं नमः दक्ष पार्श्वे । ॐ फं नमः वाम पार्श्वे । ॐ बं नमः पृष्ठे । ॐ भं नमः नाभौ । ॐ मं नमः कुक्षौ । ॐ यं त्वगात्मने नमः । ॐ रं असृगात्मने नमः दक्षस्कन्धे । ॐ लं मांसात्मने नमः गल पृष्ठ भागे । ॐ वं मेदसात्मनेनमः वामस्कंधे । ॐशं अस्थ्यात्मने नमः हृदयादि दक्षहस्तान्तम् । ॐ षं मज्जात्मने नमः हृदयादि वामहस्तान्तम्। ॐ सं शुक्रात्मने नमः हृदयाादि दक्षपादान्ते । ॐ हं आत्मने नमः वामपादान्ते ।ॐ ळं परमात्मने नमः जठरः। ॐ क्षं प्राणात्मने नमः मुखे।



विनियोगः
अस्य श्री नर्वाणमन्त्रस्य
ब्रह्माविष्णुरुद्राऋषयः
गायत्र्युष्णिगनुष्टुपश्छन्दांसि
श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यो
देवता नन्दाशाकम्भरीभीमाशक्तयः
रक्तदन्तिका दुर्गाभ्रामर्योबीजानि
अग्निवायुसूर्यास्तत्त्वानि
ऋग्यजुःसामवेदाध्यानानि
सर्वाभीष्टसिद्धये जपे विनियोगः

♦ऋष्यादि न्यास
ब्रह्माविष्णुरुद्रऋषिभ्यो नमः शिरसि
गायत्र्युष्णिगनुष्टुपश्छन्देभ्यो नमः मुखे
महाकालीमहालक्ष्मीमहासरस्वतीदेवताभ्यो नमः हृदि
नन्दाशाकम्भरीभीमाशक्तिभ्यो नमः दक्षिणस्तने
रक्तदन्तिका दुर्गाभ्रामरींबीजेभ्यो नमः वामस्तने
अग्निवायुसूर्यास्तत्त्वभ्यो नमः हृदि

## एकादश न्यास

♦शुद्धमातृकान्यास
( प्रथम ) देवसदृश

अं नमः ललाटे
आं नमःमुखवृत्ते
इं नमः दक्षिण नेत्रे
ईं नमः वामनेत्रे
उं नमः दक्षिणकर्णे
ऊं नमः वाम कर्णे
ऋं नमः दक्षिणनासापुटे
ॠं नमः वामनासापुटे
लृं नमः दक्षिण कपोले
लॄं नमः वाम कपोले
एं नमः ऊर्ध्वोष्ठे
ऐं नमः अधरोष्ठे
ओं नमः ऊर्ध्वदन्तपंङ्क्तौ
औं नमः अधोदन्तपंङ्क्तौ
अं नमः मूर्ध्नि । अः नमः मुखे
कं नमः दक्षबाहुमूले
खं नमः दक्षबाहुकूर्परे
गं नमः दक्षबाहुमणिबन्धे
घं नमः दक्षबाहुहस्ताङ्गुलिमूले
ङं नमः दक्षबाहुहस्ताङ्गुल्यग्रे
चं नमः वामबाहुमूले
छं नमः वामबाहुकूर्परे
जं नमः वामबाहुमणिबन्धे
झं नमः बाहुहस्ताङ्गुलिमूले
ञं नमः वामबाहुहस्ताङ्गुल्यग्रे
टं नमः दक्षिणपादमूले
ठं नमः दक्षिणपादजानुनि
डं नमः दक्षिणगुल्फे
ढं नमः दक्षिणपादङ्गुलिमूले
णं नमः दक्षपादाङ्गुल्यग्रे
तं नमः वामपादाङ्गुलिमूले
थं नमः वामपादजानुनि
दं नमः वामपादगुल्फे
धं नमः वामपादाङ्गुलिमूले
नं नमः वामपादाङ्गुल्यग्रे
पं नमः दक्षिणपार्श्वे
फं नमः वामपार्श्वे
बं नमः पृष्ठे
भं नमः नाभौ
मं नमः उदरे
यं त्वगात्मने नमः हृदि
रं असृगात्मने नमः दक्षस्कन्धे

लं मांसात्मने नमः गलपृष्ठभागे
वं मेदसात्मनेनमः वामस्कंधे
शं अस्थ्यात्मने नमः हृदयादि दक्षहस्तान्तम्
षं मज्जात्मने नमः हृदयादि वामहस्तान्तम्
सं शुक्रात्मने नमः हृदयाादि दक्षपादान्तम्
हं आत्मने नमः हृदयाादि वामपादान्तम्
ळं परमात्मने नमः जठरे
क्षं प्राणात्मने नमः मुख

♦सारस्वत न्यास
(द्वितीय) ज्ञानोदय

ऐं ह्रीं क्लीं नमः कनिष्ठिकयोः
ऐं ह्रीं क्लीं नमः अनामिकयोः
ऐं ह्रीं क्लीं नमः मध्यमयोः
ऐं ह्रीं क्लीं नमः तर्जन्योः
ऐं ह्रीं क्लीं नमः अंगुष्ठयोः
ऐं ह्रीं क्लीं नमः करतलयोः
ऐं ह्रीं क्लीं नमः करपृष्ठयोः
ऐं ह्रीं क्लीं नमः मणिबन्धयोः
ऐं ह्रीं क्लीं नमः कूर्परयोः
ऐं ह्रीं क्लीं नमः हृदयाय नमः
ऐं ह्रीं क्लीं नमः शिरसे स्वाहा
ऐं ह्रीं क्लीं नमः शिखायै वषट्
ऐं ह्रीं क्लीं नमः कवचाय हुम्
ऐं ह्रीं क्लीं नमः नेत्रत्रयाय वौषट
ऐं ह्रीं क्लीं नमः अस्त्राय फट्

♦मातृकागणन्यास
(तृतीय) त्रैलोक्यविजयप्राप्ति

ह्रीं ब्राह्मी पूर्वतः मां पातु
ह्रीं माहेश्वरी आग्नेयां मां पातु
ह्रीं कौमारी दक्षिणे मां पातु
ह्रीं वैष्णवी नैऋत्ये मां पातु
ह्रीं वाराही पश्चिमे मां पातु
ह्रीं इन्द्राणी वायव्यै मां पातु
ह्रीं चामुण्डा उत्तरे मां पातु
ह्रीं महालक्ष्मी ऐशान्ये मां पातु
ह्रीं व्योमेश्वरी ऊर्ध्वं मां पातु
ह्रीं सप्तद्वीपेश्वरी भूमौ मां पातु
ह्रीं कामेश्वरी पाताले मां पातु

♦षड्देवीन्यास
(चतुर्थ) जरामृत्युमुक्तिः

कमलाकुशमण्डिता नन्दजा पूर्वाङ्गं मे पातु
खड्गपात्रकरा रक्तदन्तिका दक्षिणाङ्गं मे पातु
पुष्पपल्लव संयुता शाकम्भरी पृष्ठाङ्गं मे पातु
धनुर्बाणकरा दुर्गा वामाङ्गं मे पातु
शिरःपात्रकराभीमा मस्तकादि चरणान्तं मे पातु
चित्रकान्तिभृत् भ्रामरी पादादि मस्तकान्तं मे पातु

♦ब्रह्मसंज्ञकन्यास
(पंचम) मनोरथपूर्ण

सनातन ब्रह्मा पादादिनाभिपर्यन्तं मां पातु
जनार्दनः नार्भेविशुद्धिपर्यन्तं मां पातु
रुद्रस्त्रिलोचनः विशुर्द्धेब्रह्मरंध्रान्तं मांपातु
हंसः पदद्वयं मे पातु
वैनतेयः करद्वयं मे पातु
वृषभः चक्षुषी मे पातु
गजाननः सर्वाङ्गानि मे पातु
आनन्दमयौहरिः परापरौदेहभागौ मेपातु



♦महालक्ष्म्यादिन्यास
(षष्ठ) सद्गतिप्राप्ति

अष्टादशभुजान्विता महालक्ष्मी मध्यं मे पातु
अष्टोभुर्जोजिता सरस्वती ऊर्ध्वं मे पातु
दशबाहुसमन्विता महाकाली अधः मे पातु
सिंहो हस्तद्वयं मे पातु
परंहसो अक्षियुग्मं मे पातु
दिव्यं महिषारुढो यमः पदद्वयं मे पातु
चण्डिकायुक्तो महेशः सर्वाङ्गानि मे पातु

♦वर्णन्यास
(सप्तम) रोगनाशः

ऐं नमः शिखायाम्
ह्रीं नमः दक्षिणनेत्रे
क्लीं नमः वामनेत्रे
चां नमः दक्षिणकर्णे
मुं नमः वामकर्णे
डां नमः दक्षिणनासापुटे
यैं नमः वामनासापुटे
विं नमः मुखे
च्चें नमःगुह्ये

♦विलोमवर्णन्यास
(अष्टम) दुःखनाश

च्चें नमःगुह्ये
विं नमः मुखे
यैं नमः वामनासापुटे
डां नमः दक्षिणनासापुटे
मुं नमः वामकर्णे
चां नमः दक्षिणकर्णे
क्लीं नमः वामनेत्रे
ह्रीं नमः दक्षिणनेत्रे
ऐं नमः शिखायाम्

♦मंत्रव्याप्तिरुपन्यास
(नवम) देवत्वप्राप्ति

मूलमंत्र मस्तकाच्चरणान्तये नमः पूर्वभागे (अष्टवारम्)
मूलमंत्र दक्षिणभागे नमः (अष्टवारम्)
मूलमंत्र वामभागे नमः (अष्टवारम्)
मूलमंत्र पृष्ठभागे नमः (अष्टवारम्)
मूलमंत्र मस्तकाच्चरणान्तये नमः (अष्टवारम्)
मूलमंत्र पादादिशिरोऽन्तये नमः (अष्टवारम्)

♦षडङ्गन्यास
(दशम) त्रैलोक्यप्राप्ति

मूलमंत्र हृदयाय नमः
मूलमंत्र शिरसे स्वाहा
मूलमंत्र शिखायै वषट्
मूलमंत्र कवचाय हुम्
मूलमंत्र नेत्रत्रयाय वौषट्
मूलमंत्र अस्त्राय फट्

♦एकादशन्यास

- खड्गिनी - सौम्या - यच्च - ययात्वया - विष्णुः ऐं बीजं कृष्णतरं ध्यात्वा सर्वाङ्गे विन्यसामि
- शूलेनपाहि - प्राच्यांरक्ष - सौम्यानियानिरुपाणि - खड्गशूल ह्रीं बीजै सूर्यसदृशं ध्यात्वा सर्वाङ्गे विन्यसामि
- सर्वस्वरुपेसर्वेशे - एतत्तेवदनं -

ज्वालाकरान्तमृत्युग्रम - हिनस्तिदैत्य -
असुरासृग्वसा क्लीं बीजं स्फटिकाभं ध्यात्वा
सर्वाङ्गे विन्यसामि
ऐं हृदयाय नमः
ह्रीं शिरसे स्वाहा
क्लीं शिखायै वषट्
चामुण्डायै कवचाय हुम्
विच्चे नेत्रत्रयाय वौषट्
ऐं ह्रीं क्लीं चामुण्डायै विच्चे अस्त्राय फट्

♦अक्षरन्यास

ऐं नमः शिखायाम्
ह्रीं नमः दक्षिणनेत्रे
क्लीं नमः वामनेत्रे
चां नमः दक्षिणकर्णे
मुं नमः वामकर्णे
डां नमः दक्षिणनासापुटे
यैं नमः वामनासापुटे
विं नमः मुखे
च्चें नमःगुह्ये
ऐं ह्रीं क्लीं चामुण्डायै विच्चे सर्वांगे
त्रिदेवीध्यानः खड्गं - अक्षस्त्रक्परशुं - घण्टा

♦यन्त्रपूजन♦

♦पीठपूजा - मध्ये
आधारशक्तये नमः
प्रकृतये नमः
कूर्माय नमः
शेषाय नमः
पृथिव्यैनमः
सुधाम्बुधये नमः
मणिद्वीपाय नमः
चिन्तामणि गृहाय नमः
श्मशानाय नमः
पारिजाताय नमः
रत्नवेदिकाय नमःकर्णिकायाः मूले
मणिपीठाय नमः कर्णिकोपरि

♦पीठपूजा - चतुर्दिक्षु
नानामुनिभ्यो नमः
नानादेवेभ्यो नमः
शवेभ्यो नमः
सर्वमुण्डेभ्यो नमः
शिवाभ्यो नमः
धर्माय नमः
ज्ञानाय नमः
वैराग्याय नमः
ऐश्वर्याय नमः
चतुष्कोणे
अधर्माय नमः
अज्ञानाय नमः
अवैराग्याय नमः
अनैश्वर्याय नमः

♦पीठपूजा - पुर्नमध्ये
आनन्दकन्दायै नमः
संविन्नालाय नमः
सर्वतत्वात्मकपद्माय नमः
प्रकृतमयपत्रेभ्यो नमः
विकपरमयकेसरेभ्यो नमः
पञ्चाशद्बीजाद्यकर्णिकाय नमः
द्वादशकलात्मने सूर्यमण्डलायै नमः
षोडशकलात्मने सोममण्डलाय नमः
दशकलात्मनेवह्निमण्डलाय नमः
सं सत्वाय नमः
रं रजसे नमः



तं तमसे नमः
आं आत्मने नमः
अं अन्तरात्मने नमः
पं परमात्मने नमः
ह्रीं ज्ञानात्मने नमः

♦पीठपूजा - चतुर्दिक्षु
जयायै नमः पूर्वै
विजयायै नमः आग्नेये
अजितायै नमः दक्षिणे
अपराजिताय नमः नैऋत्यै
नित्याय नमः पूर्वै
विलासिन्यै नमः वायव्यै
दोग्ध्रै नमः उत्तरे
अघोराय नमः ऐशान्ये
मंङ्गलायै नमः मध्ये

ह्रीं चण्डिकायोपीठात्मने नमः - इस मंत्र से आसन देकर पूजा कर आज्ञा ले आवरण पूजा करें।

♦अधःशीर्षत्रिकोणमध्ये ( त्रिकोण के मध्य बिंदु पर देवी का ध्यान- मूलमंत्र से पूजन - निम्नलिखित मंत्र से पुज्पाञ्जलि देकर देवी की आज्ञा लें )
संविन्मयं परं देवी परामृत रसप्रिये ।
अनुज्ञां चण्डिके देहि पविारार्चनाय मे ॥

♦ प्रथमावरण
ऐं हृदयाय नमः आग्नेये
ह्रीं शिरसे स्वाहा ऐशान्ये
क्लीं शिखायै वषट् नैऋत्यै
चामुण्डायै कवचाय हुम् वायव्ये
विच्चे नेत्रत्रयाय वौषट् मध्ये
ऐं ह्रीं क्लीं चामुण्डायै विच्चे अस्त्राय फट् चतुर्दिक्षु
अभीष्ट सिद्धिं मे देहि शरणागत वत्सले
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥

♦ द्वितीयावरण
सरस्वतीब्रह्माभ्यां नमः पूर्वकोणे
लक्ष्मीविष्णुभ्यां नमः नैऋत्यकोणे
गौरीरुद्राभ्यां नमः वायव्यकोणे
सिं सिंहाय नमः उत्तरे
मं महिषाय नमः दक्षिणे
अभीष्ट सिद्धिं मे देहि शरणागत वत्सले
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥

♦ तृतीयावरण ( षट्कोण )
नं नन्दजायै नमः पूर्वे
रं रक्तदन्तिकायै नमः आग्नेये
शां शाकम्भर्यै नमः दक्षिणे
दुं दुर्गायै नमः नैर्ऋत्ये
भीं भीमायै नमः पश्चिमे
भ्रां भ्रामर्यै नमः वायव्ये
अभीष्ट सिद्धिं मे देहि शरणागत वत्सले
भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ॥

♦ चतुर्थावरण अष्टदले
ब्रं ब्रह्मण्ये नमः पूर्वदले
मां माहेश्वर्यै नमः आग्नेयदले
कौं कौमार्यै नमः दक्षिणदले
वैं वैष्णव्यै नमः नैर्ऋत्यदले
वां वाराह्यै नमः पश्चिमदले
नां नारसिंह्यै नमः वायव्यदले
ऐं ऐन्द्र्यै नमः उत्तरदले
चां चामुण्डायै नमः ऐशान्यदले

♦ **पञ्चमावरण**

चतुर्विंशति दल पूर्वादि कम
विं विष्णुमायायै नमः
चें चेतनायै नमः
बुं बुद्धयै नमः
निं निद्रायै नमः
क्षुं क्षुधायै नमः
छां छायायै नमः
शं शक्त्यै नमः
तृं तृष्णायै नमः
क्षां क्षान्त्यै नमः
जां जात्यै नमः
लं लज्जायै नमः
शां शान्त्यै नमः
श्रं श्रद्धायै नमः
कां कान्त्यै नमः
लं लक्ष्म्यै नमः
धृं धृत्यै नमः
वृं वृत्यै नमः
श्रुं श्रुत्यै नमः
स्मृं स्मृत्यै नमः
तुं तुष्ट्यै नमः
पुं पुष्ट्यै नमः
दं दयायै नमः
मां मात्रे नमः
भ्रां भ्रान्त्यै नमः

♦ **षष्ठावरण**

भूपुर के बाहर
गं गणपतये नमः आग्नेये
क्षं क्षेत्रपालाय नमः नैर्ऋत्ये
बं बटुकाय नमः वाायव्ये
यों योगिनीभ्यो नमः ऐशान्ये

♦ **सप्तमावरण**

भूपुर के पूर्वादि
लं इन्द्राय नमः पूर्वे
रं अग्नये नमः आग्नेये
मं यमाय नमः दक्षिणे
क्षं निऋत्यै नमःनैर्ऋत्ये
वं वरुणाय नमः पश्चिमे
यं वायवे नमः वायव्ये
सं सोमाय नमः उत्तरे
हं ईशानाय नमः ऐशान्ये
अं ब्रह्मणे पूर्वीषार्नोमध्ये
ह्रीं अनन्तायनमः नैर्ऋत्यपश्मिर्योमध्ये

♦ **अष्टमावरण**

वं वज्राय नमः
शं शक्त्यै नमः
दं दण्डाय नमः
खं खड्गाय नमः
पां पाशाय नमः
अं अंकुशाय नमः
गं गदायै नमः
शूं शूलायै नमः
चं चक्रायै नमः
पं पद्मायै नमः

त्रिदेवीपंचोपचारादि - नीराजन - जप

卐



## नवाक्षरीस्तोत्र

श्रीगुरुचरणसरोजं श्रीकरभवतरणसुकरदृढनावम् ।
मच्चितमधुपझंकृतमानन्दं नौमि शांकरं शरण्यम् ॥ १ ॥
ऐन्द्रधनुर्मरतकमामैरावतनाथगीर्भिरभ्यर्च्याम् ।
ऐंकारार्थस्वरूपामैशानीनाथसेवितां वन्दे ॥ २ ॥
ह्रीनतदैत्यसमूहां हृद्यां सुरलोकसेविताह्ङ्घ्रियुगाम् ।
ह्रींकारान्त्यसरूपां हृदयविलासप्रचोदितां वन्दे ॥ ३ ॥
क्लींकारकामजननीं क्लीमितिशब्दप्रपूरितादिगन्ताम् ।
क्लीबस्त्रीपुंशब्दक्रीडारूपां नमामि विश्वमयीम् ॥ ४ ॥
चामरबिभ्रद्वाणीचन्द्रसजातासुसेव्यपार्श्वयुगाम् ।
चरणतलमहिषमुण्डां चापादिकरां नमामि चामुण्डाम् ॥ ५ ॥
मुण्डमणिहारकण्ठीं मुकुरकपोलप्रभासुशोभमुखीम् ।
मुहुरास्फालितधनुषं मुरहरभागिनीं नमामि मुग्धतनुम् ॥ ६ ॥
डाकिन्याद्यभितुष्टां डमरुकनादेन पूरितादिगन्ताम् ।
डम्भाभिमानहन्त्रीं डामरतन्त्रप्रकाशितां वन्दे ॥ ७ ॥
यैवर्णसत्यमायायस्यै दत्तान्यायुधानि शक्राद्यैः ।
यौवनमदसाम्राज्यायै तस्यै नमोऽस्तु विद्यायै ॥ ८ ॥
विश्वोत्तीर्णां विद्यां विविधजगच्चित्रकल्पनारूपाम् ।
वियदादिसृष्टिहेतुं विश्वासैकप्रकाशितां नौमि ॥ ९ ॥
चेतसि नितरां वासितचेतोमयि चैत्यचेतने चतुरे ।
चम्पककलिकानासे चामीकरभासुराङ्गि नौमि त्वाम् ॥ १० ॥
अक्षरनवाक्षरीयं निक्षेपमयी सुवाक्सुधारूपा ।
एतत् स्तोत्रम् पठतां यच्छति सौभाग्यकीर्तिपुष्टिधृतीः ॥ ११ ॥
॥ इत्यानन्दनाथपादपद्मोपजीविना काश्यपगोत्रोत्पन्नेनान्ध्रेण
त्यागराजनाम्ना विरचितं नवाक्षरीस्तोत्रं संपूर्णम् ॥

॥ श्रीदुर्गायै नमः ॥

॥ अथ श्रीदुर्गासप्तशती ॥

बन्धूककुसुमाभासां पञ्चमुण्डाधिवासिनीम् ।
स्फुरच्चन्द्रकलारत्नमुकुटां मुण्डमालिनीम् ॥
त्रिनेत्रां रक्तवसनां पीनोन्नतघटस्तनीम् ।
पुस्तकं चाक्षमालां च वरं चाभयकं क्रमात् ॥
दधतीं संस्मरेन्नित्यमुत्तराम्नायमानिताम् ।

या चण्डी मधुकैटभादिदैत्यदलनी या माहिषोन्मूलिनी
या धूम्रेक्षणचण्डमुण्डमथनी या रक्तबीजाशनी ।
शक्तिः शुम्भनिशुम्भदैत्यदलनी या सिद्धिदात्री परा
सा देवी नवकोटिमूर्तिसहिता मां पातु विश्वेश्वरी ॥

अथ देवी कवचम् ॥
नमश्चण्डिकायै
मार्कण्डेय उवाच ।
यद्गुह्यं परमं लोके सर्वरक्षाकरं नृणाम् ।
यन्न कस्यचिदाख्यातं तन्मे ब्रूहि पितामह ॥ १ ॥
ब्रह्मोवाच ।
अस्ति गुह्यतमं विप्र सर्वभूतोपकारकम् ।
देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ॥ २ ॥
प्रथमं शैलपुत्रीति द्वितीयं ब्रह्मचारिणी ।
तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम् ॥ ३ ॥
पञ्चमं स्कन्दमातेति षष्ठं कात्यायनी तथा ।
सप्तमं कालरात्रिश्च महागौरीति चाष्टमम् ॥ ४ ॥
नवमं सिद्धिदात्री च नवदुर्गाः प्रकीर्तिताः ।
उक्तान्येतानि नामानि ब्रह्मणैव महात्मना ॥ ५ ॥
अग्निना दह्यमानास्तु शत्रुमध्यगता रणे ।
विषमे दुर्गमे चैव भयार्ताः शरणं गताः ॥ ६ ।
न तेषां जायते किञ्चिदशुभं रणसङ्कटे ।
आपदं न च पश्यन्ति शोकदुःखभयङ्करीम् ॥ ७ ॥
यैस्तु भक्त्या स्मृता नित्यं तेषां वृद्धिः प्रजायते ।



ये त्वां स्मरन्ति देवेशि रक्षसि तान्न संशयः ॥ ८ ॥
प्रेतसंस्था तु चामुण्डा वाराही महिषासना ।
ऐन्द्री गजसमारूढा वैष्णवी गरुडासना ॥ ९ ॥
नारसिंही महावीर्या शिवदूती महाबला ।
माहेश्वरी वृषारूढा कौमारी शिखिवाहना ॥ १० ॥
लक्ष्मीः पद्मासना देवी पद्महस्ता हरिप्रिया ।
श्वेतरूपधरा देवी ईश्वरी वृषवाहना ॥ ११ ॥
ब्राह्मी हंससमारूढा सर्वाभरणभूषिता ।
इत्येता मातरः सर्वाः सर्वयोगसमन्विताः ॥ १२ ॥
नानाभरणशोभाढ्या नानारत्नोपशोभिताः ।
श्रेष्ठैश्च मौक्तिकैः सर्वा दिव्यहारप्रलम्बिभिः ॥ १३ ॥
इन्द्रनीलैर्महानीलैः पद्मरागैः सुशोभनैः ।
दृश्यन्ते रथमारूढा देव्यः क्रोधसमाकुलाः ॥ १४ ॥
शङ्खं चक्रं गदां शक्तिं हलं च मुसलायुधम् ।
खेटकं तोमरं चैव परशुं पाशमेव च ॥ १५ ॥
कुन्तायुधं त्रिशूलं च शार्ङ्गमायुधमुत्तमम् ।
दैत्यानां देहनाशाय भक्तानामभयाय च ॥ १६ ॥
धारयन्त्यायुधानीत्थं देवानां च हिताय वै ।
नमस्तेऽस्तु महारौद्रे महाघोरपराक्रमे ॥ १७ ॥
महाबले महोत्साहे महाभयविनाशिनि ।
त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनि ॥ १८ ॥
प्राच्यां रक्षतु मामैन्द्री आग्नेय्यामग्निदेवता ।
दक्षिणेऽवतु वाराही नैरृत्यां खड्गधारिणी ॥ १९ ॥
प्रतीच्यां वारुणी रक्षेद्वायव्यां मृगवाहिनी ।
उदीच्यां पातु कौबेरी ईशान्यां शूलधारिणी ॥ २० ॥
ऊर्ध्वं ब्रह्माणी मे रक्षेदधस्ताद्वैष्णवी तथा ।
एवं दश दिशो रक्षेच्चामुण्डा शववाहना ॥ २१ ॥
जया मामग्रतः पातु विजया पातु पृष्ठतः ।
अजिता वामपार्श्वे तु दक्षिणे चापराजिता ॥ २२ ॥
शिखां मे द्योतिनी रक्षेदुमा मूर्ध्नि व्यवस्थिता ।
मालाधरी ललाटे च भ्रुवौ रक्षेद्यशस्विनी ॥ २३ ॥
नेत्रयोश्चित्रनेत्रा च यमघण्टा तु पार्श्वके ।
त्रिनेत्रा च त्रिशूलेन भ्रुवोर्मध्ये च चण्डिका ॥ २४ ॥
शङ्खिनी चक्षुषोर्मध्ये श्रोत्रयोर्द्वारवासिनी ।
कपोलौ कालिका रक्षेत् कर्णमूले तु शाङ्करी ॥ २५ ॥

नासिकायां सुगन्धा च उत्तरोष्ठे च चर्चिका।
अधरे चामृताबाला जिह्वायां च सरस्वती॥ २६॥
दन्तान् रक्षतु कौमारी कण्ठदेशे तु चण्डिका।
घण्टिकां चित्रघण्टा च महामाया च तालुके॥ २७॥
कामाक्षी चिबुकं रक्षेद्वाचं मे सर्वमङ्गला।
ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्धरी॥ २८॥
नीलग्रीवा बहिः कण्ठे नलिकां नलकूबरी।
स्कन्धयोः खड्गिनी रक्षेद् बाहू मे वज्रधारिणी॥ २९॥
हस्तयोर्दण्डिनी रक्षेदम्बिका चाङ्गुलीषु च।
नखाञ्छूलेश्वरी रक्षेत् कुक्षौ रक्षेन्नरेश्वरी॥ ३०॥
स्तनौ रक्षेन्महादेवी मनःशोकविनाशिनी।
हृदये ललिता देवी उदरे शूलधारिणी॥ ३१॥
नाभौ च कामिनी रक्षेद् गुह्यं गुह्येश्वरी तथा।
मेढ्रं रक्षतु दुर्गन्धा पायुं मे गुह्यवाहिनी॥ ३२॥
कट्यां भगवती रक्षेदूरू मे मेघवाहना।
जङ्घे महाबला रक्षेत् जानू माधवनायिका॥ ३३॥
गुल्फयोर्नारसिंही च पादपृष्ठे तु कौशिकी।
पादाङ्गुलीः श्रीधरी च तलं पातालवासिनी॥ ३४॥
नखान् दंष्ट्रकराली च केशांश्चैवोर्ध्वकेशिनी।
रोमकूपेषु कौमारी त्वचं योगीश्वरी तथा॥ ३५॥
रक्तमज्जावसामांसान्यस्थिमेदांसि पार्वती।
अन्त्राणि कालरात्रिश्च पित्तं च मुकुटेश्वरी॥ ३६॥
पद्मावती पद्मकोशे कफे चूडामणिस्तथा।
ज्वालामुखी नखज्वालामभेद्या सर्वसन्धिषु॥ ३७॥
शुक्रं ब्रह्माणी मे रक्षेच्छायां छत्रेश्वरी तथा।
अहङ्कारं मनो बुद्धिं रक्षेन्मे धर्मधारिणी॥ ३८॥
प्राणापानौ तथा व्यानमुदानं च समानकम्।
वज्रहस्ता च मे रक्षेत् प्राणान् कल्याणशोभना॥ ३९॥
रसे रूपे च गन्धे च शब्दे स्पर्शे च योगिनी।
सत्त्वं रजस्तमश्चैव रक्षेन्नारायणी सदा॥ ४०॥
आयू रक्षतु वाराही धर्मं रक्षतु पार्वती।
यशः कीर्तिं च लक्ष्मीं च सदा रक्षतु वैष्णवी॥ ४१॥
गोत्रमिन्द्राणी मे रक्षेत् पशून् रक्षेच्च चण्डिका।
पुत्रान् रक्षेन्महालक्ष्मीर्भार्यां रक्षतु भैरवी॥ ४२॥
धनेश्वरी धनं रक्षेत् कौमारी कन्यकां तथा।



पन्थानं सुपथा रक्षेन्मार्गं क्षेमङ्करी तथा॥ ४३॥
राजद्वारे महालक्ष्मीर्विजया सतत स्थिता।
रक्षाहीनं तु यत् स्थानं वर्जितं कवचेन तु॥ ४४॥
तत्सर्वं रक्ष मे देवि जयन्ती पापनाशिनी।
सर्वरक्षाकरं पुण्यं कवचं सर्वदा जपेत्॥ ४५॥
इदं रहस्यं विप्रर्षे भक्त्या तव मयोदितम्॥
पादमेकं न गच्छेत् तु यदीच्छेच्छुभमात्मनः॥ ४६॥
कवचेनावृतो नित्यं यत्र यत्रैव गच्छति।
तत्र तत्रार्थलाभश्च विजयः सार्वकालिकः॥ ४७॥
यं यं चिन्तयते कामं तं तं प्राप्नोति निश्चितम्।
परमैश्वर्यमतुलं प्राप्स्यते भूतले पुमान्॥ ४८॥
निर्भयो जायते मर्त्यः सङ्ग्रामेष्वपराजितः।
त्रैलोक्ये तु भवेत्पूज्यः कवचेनावृतः पुमान्॥ ४९॥
इदं तु देव्याः कवचं देवानामपि दुर्लभम्।
यः पठेत्प्रयतो नित्यं त्रिसन्ध्यं श्रद्धयान्वितः॥ ५०॥
दैवीकला भवेत्तस्य त्रैलोक्ये चापराजितः।
जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः॥ ५१॥
नश्यन्ति व्याधयः सर्वे लूताविस्फोटकादयः।
स्थावरं जङ्गमं चैव कृत्रिमं चैव यद्विषम्॥ ५२॥
अभिचाराणि सर्वाणि मन्त्रयन्त्राणि भूतले।
भूचराः खेचराश्चैव कुलजाश्चौपदेशिकाः॥ ५३॥
सहजा कुलजा माला डाकिनी शाकिनी तथा।
अन्तरिक्षचरा घोरा डाकिन्यश्च महारवाः॥ ५४॥
ग्रहभूतपिशाचाश्च यक्षगन्धर्वराक्षसाः।
ब्रह्मराक्षसवेतालाः कूष्माण्डा भैरवादयः॥ ५५॥
नश्यन्ति दर्शनात्तस्य कवचेनावृतो हि यः।
मानोन्नतिर्भवेद्राज्ञस्तेजोवृद्धिः परा भवेत्॥ ५६॥
यशोवृद्धिर्भवेत् पुंसां कीर्तिवृद्धिश्च जायते।
तस्मात् जपेत् सदा भक्तः कवचं कामदं मुने॥ ५७॥
जपेत् सप्तशतीं चण्डीं कृत्वा तु कवचं पुरा।
निर्विघ्नेन भवेत् सिद्धिश्चण्डीजपसमुद्भवा॥ ५८॥
यावद्भूमण्डलं धत्ते सशैलवनकाननम्।
तावत्तिष्ठति मेदिन्यां सन्ततिः पुत्रपौत्रिकी॥ ५९॥
देहान्ते परमं स्थानं सुरैरपि सुदुर्लभम्।
प्राप्नोति पुरुषो नित्यं महामायाप्रसादतः॥ ६०॥

म इतिश्च मे गतिश्च मे ॥५॥

अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्र॒ मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे मित्रश्च म इन्द्र॒ मे वरुणश्च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे धाता च म इन्द्रश्च मे विष्णु॒ म इन्द्र श्च मेऽश्विनौ च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे मूर्धा च म इन्द्रश्च मे प्रजापतिश्च म इन्द्रश्च मे ॥६॥

अंगशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च म उपागंशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आ श्विनश्च मे प्रतिप्रस्थानश्च म शुक्रश्च मे मन्थी च म आग्रयणश्च मे वै श्वदेवश्च मे ध्रुवश्च मे वै श्वानरश्च म ऋतुग्रहाश्च मेऽतिग्राह्याश्च म ऐन्द्राग्नश्च सावित्रश्च मे सारस्वतश्च मे पौष्णश्च मे पात्नीवतश्च मे हारियोजनश्च मे ॥७॥

इध्मश्च मे बर्हिश्च मे वेदिश्च मे धिष्णियाश्च मे स्रुचश्च मे चमसाश्च मे ग्रावाणश्च मे स्वरवश्च म उपरवाश्च मेऽधिषवणे च मे द्रोणकलशश्च मे वायव्यानि च मे पूतभृञ्च म आधवनीयश्च म आग्नीध्रं च मे हविर्धानं च मे गृहाश्च मे सदश्च मे पुरोडाशाश्च मे पचताश्च मेऽवभृथश्च मे स्वगाकारश्च मे ॥८॥

अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मे शक्वरीरङ्गुलयो दिशश्च मे यज्ञेन कल्पन्तामृक्च मे साम च मे स्तोमश्च मे यजुश्च मे दीक्षा च मे तपश्च म ऋतुश्च मे व्रतं च मेऽहोरात्रयोर्वृष्ट्या बृहद्रथन्तरे च मे यज्ञेन कल्पेताम् ॥९॥

गर्भाश्च मे वत्साश्च मे त्र्यविश्च मे त्र्यवीच मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट् च मे तुर्यौही च मे षष्ठवाट् च मे पष्ठौही च म उक्षा च मे वशा च म ऋषभश्च मे वेहञ्च मेऽनड्वाञ्च मे धेनुश्च म आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताग् श्रोत्रं यज्ञेन कल्पतां



मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् ॥१०॥

एका च मे तिस्रश्च मे पञ्च च मे सप्त च मे नव च म एकादश च मे त्रयोदश च मे पञ्चदश च मे सप्तदश च मे नवदश च म एकविगंशतिश्च मे त्रयोविगंशतिश्च मे पञ्चविगंशतिश्च मे सप्तविगंशतिश्च मे नवविगंशतिश्च म एकात्रिगंशच्च मे त्रयस्त्रिगंशच्च मे चतस्रश्च मेऽष्टौ च मे द्वादश च मे षोडश च मे विगंशतिश्च मे द्वात्रिगंशच्च मे षटत्रिगंशच्च मे चत्वारिंगशच्च मे चतुश्चत्वारिगंशच्च मेऽष्टाचत्वारिंग्शच्च प्रसचश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्चान्त्यायनश्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च ॥११॥

ॐ इडा देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानि शगंसिषद्विश्वे देवाः सूक्तवाचः पृथिविमातर्मा मा हिंग्सीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधमतीं देवेभ्यो वाचमुद्यासगंशुश्रुषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शौभायै पितरोऽनुमदन्तु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

## शिवाथर्वशीर्ष

ओम् देवा ह वै स्वर्गलोक मायंस्ते रुद्रपृच्छान् को भवानिति सो ब्रवीदहमेकः प्रथमममासोद्वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति । सोन्तरादन्तरं प्राविशद्दिशश्चान्तरं प्राविशत्सोहं नित्यानित्यो व्यक्ताव्यक्तो ब्रह्माब्रह्माहं प्रांचः प्रत्यंचोहं दक्षिणांच उदंचोऽहम् अधश्चोर्ध्वश्चाहं दिशश्च प्रतिदिशश्चाहं पुमानपुमान् स्त्रियश्चाहं सावित्र्यहं गायत्र्यहं त्रिष्टुब्जगत्यनुष्टुप् चाहं छान्दोऽहं सत्योऽहं गार्हपत्यो दक्षिणाग्निराहवनीयोऽहम् गौरहं गौर्यहम् ऋगहं यजुरहंसामाहं अथर्वांगिरसोऽहम् ज्येष्ठोऽहम् श्रेष्ठोऽहम् वरिष्ठोऽहम् आपोऽहं तेजोऽहं गुह्योऽहमरर्त्योहमक्षरमहं क्षरमहं पुष्करमहं पवित्रमहं उग्रंच बलिश्च पुरस्ताज्ज्योति रित्यहमेव सर्वेभ्यो मामेव स सर्वः समो यो मां वेद स देवान्वेद स सर्वान् वेदान् सांगानपि ब्रह्म ब्राह्मणैश्च गां गोभिर्ब्राह्मणान् ब्राह्मणेन हविर्हविषा

आयुरायुषा सत्यं सत्येन धर्मेण धर्मं तर्पयामि स्वेन तेजसा ।

ततो ह वै ते देवा रुद्रमपृच्छान् ते देवा रुद्रमपश्यन् ते देवा रूद्रमध्यायन् ते देवा ऊर्ध्वाबाहवो रुद्रं स्तुवन्ति ।

ओम् यो वै रुद्रः स भगवान् यश्च ब्रह्मास्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यश्च विष्णुस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यश्च स्कन्दस्तस्मै वै नमो नमः ।
यो वे रुद्रः स भगवान् यश्च इन्द्रस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान यश्च सूर्यस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यश्च सोमस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् येष्टौग्रहास्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् ये चाष्टौ प्रतिग्रहास्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यश्च भूस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यश्च भुवस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यश्च स्वस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यश्च महस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् या च पृथिवीस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यच्चान्तरिक्षंस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् या च द्यौस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् याश्चापस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यश्च तेजस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यश्च कालस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यश्च यमस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यश्च मृत्युस्स्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यच्चामृतंस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यश्चकाशस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यश्च विश्वस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यश्च स्थूलंस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यच्च सूक्ष्मंस्तस्मै वै नमो नमः ।



यो वै रुद्रः स भगवान् यच्च शुक्लं स्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यश्च कृष्णांस्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यश्च कृत्स्नं स्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यच्च सत्यं स्तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यश्च सर्वस्तस्मै वै नमो नमः ।
भूस्ते आदिर्मध्यम् भुवस्ते स्वस्ते शीर्ष विश्वरूपोसि ब्रह्मैकस्त्वम् द्विधा त्रिधा वृद्धिस्त्वम् शान्तिस्त्वम् पुष्टिस्त्वम् हुतमहुतम् दत्तमदत्तं सर्वमसर्व विश्वमविश्वं कृतमकृतं परमपरम् परायणश्चत्वम् अपामसोममृता अभूमागन्म ज्योतिरविदाम देवान् ।

किम् नूनमस्मान् कृशणवदराति किमु धूर्तिरमृतं मृतस्य सोमसूर्य पुरस्तात् सूक्ष्मः पुरुषः सर्व जगद्धितं वा एतदक्षरं प्राजापत्यं सौम्यं सूक्ष्मं पुरुषं ग्राह्यमग्राह्येण भावं भावेन सौम्यं सौम्येन सूक्ष्मं सूक्ष्मेण वायव्यं वायव्येन ग्रसर्ति तस्मै महाग्रासाय वै नमो नमः । हृदिस्थाः देवताः सर्वाः हृदि प्राणाः प्रतिष्ठताः । हृदि त्वमसि यो नित्यं तिस्रो मात्राः परस्तु सः । तस्योत्तरतः शिरो दक्षिणतः पादौ यः उत्तरतः स ओंकारः यः ओंकारः सः प्रणवः यः प्रणवः सः सर्वव्यापी यः सर्वव्यापी सोनन्तः योनन्तः तत्तारम् यत्तारम् तच्छुक्लम् यच्छुक्लं तत्सूक्ष्यं यत्सूक्ष्मम् तद् वैद्युतम् यद् वैद्युतम् तत्परं ब्रह्म यत्परं ब्रह्म स एकः य एकः स रुद्रः स ईशानः य ईशानः सः भगवान्महेश्वरः ।

अथ कस्मादुच्यते ओंकार । यस्मादुच्चार्यमाण एव प्राणानूर्ध्व उत्क्रामयति तस्मादुच्यते ओंकार ।

अथ कस्मादुच्यते प्रणवः यस्मादुच्चर्यमाण एव ऋग्युजःसामाथर्वांगिरसं ब्रह्म ब्राह्मणेभ्यः प्रणामयति नामयति च तस्मादुच्यते प्रणवः । अथ कस्मादुच्यते सर्वव्यापी यमादुच्चार्यमाण एव यथा स्नेहेन पललपिंडमिव शान्तरूपमोतप्रोतमनुप्राप्तो व्यतिषिक्तश्च तस्मादुच्यते सर्वव्यापी । अथ कस्मादुच्यते अनन्तः यस्मादुच्चार्यमाण एव तीर्यगूर्ध्वमधस्तात् च अस्यान्तो नोपलभ्यते तस्मादुच्यते अनन्तः । अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भ जन्मजरामरणव्याधिभयात् तारयति त्रायते च तस्मादुच्चार्यते तारम् । अथ

कस्मादुच्यते शुक्लं यस्मादुच्चार्यमाण एव क्लन्दते क्लामयति च तस्मादुच्यते शुक्लं । अथ कस्मादुच्यते सूक्ष्मं यस्मादुच्चार्यमाण एव सूक्ष्मो भूत्वा शरीरण्यधितिष्ठति सर्वांणि चांगान्यभिमृश्यति तस्मादुच्यते सूक्ष्मम् । अथ कस्मादुच्यते वैद्युत् । अथ कस्मादुच्यते परं ब्रह्म यस्मादुच्चार्यमाण एव परमपरं परायणंश्च बृहद् बृहत्याबृहयति तस्मादुच्यते परं ब्रह्म । अथ कस्मादुच्यते एकः यः सर्वान् प्राणान् संभक्ष्य संभक्षणेनाजः संसृजति विसृजति तीर्थमेके व्रजन्ति तीर्थमेके दक्षिणाः प्रत्यंचः उदंचः प्राचोपि व्रजन्त्येके तेषां सर्वेषामिह संगतिः साकं स एकोभूदन्तश्चरति प्रजानां तस्मादुच्यते एकः । अथ कस्मादुच्यते रुद्रः यस्मात् ऋषिभिः नान्यैर्भक्तैर्दु तमस्य रूपमुपलभ्यते तस्माद् उच्यते रुद्रः । अथ कस्मादुच्यते ईशानः यः सर्वान्देवानीशत ईशानीभिः जननीभिश्च शक्तिभिः अभित्वा शूर नोनुमो दुग्धा इव धेनवः ईशानमस्य जगतः सवर्हशमीशानमिंद्र तस्थुष इति तस्यादुच्यते ईशानः । अथ कस्मादुच्यते भगवान्महेश्वरः यस्माद् भक्तान् ज्ञानेन भजत्यनुगृह्णाति च वाचं संसृजति विसृजति च सर्वान् भावान् परित्यज्यात्मज्ञानेन योगैश्र्येण महति महीयते च तस्मादुच्यते भगवान् महेश्वरः । तदेतत् रुद्रचरितम् ।

एषो ह देवः प्रदिशोनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः । स इव जातः स जनिश्यमाणः प्रत्यङ्. जनाः तिष्ठति सर्वतोमुखः । एको रुद्रो न द्वितीयाय तस्मै य इमान् लोकान् ईशत ईशनीभिः । प्रत्यङ्. जनास्तिष्ठति चान्तकाले संसृज्य विश्वा भुवनानि गोप्ता । यो योनिमधितिष्ठत्येको येनेदं सर्व विचरति सर्वम् । तमीशानं देवं वरमीड्यं नियाय्येमां शान्तिमत्यन्तमेति । समां हित्वा हेतुजालस्य मूलं बुद्ध्या संचितं स्थापयित्वातु रुद्रे । रुद्रमेकत्वमाहुः शाश्वतं वै पुराण मीषमूर्जेण पशवोनुनामयन्तं मृत्युपाशान् । तदेतेनात्मन्नेतेनार्धचतुर्थेन मात्रेण शान्तिं संसृजति पशुपाशविमोक्षणं ।

या सा प्रथमा मात्रा ब्रह्मदैबत्या रक्ता वर्णेन यस्तां ध्यायते नित्यं स गच्छेद् रुद्रपदम् । य सा द्वितीया मात्रा विष्णु दैवत्या कृष्णा वर्णेन यस्तां ध्यायते नित्यं स गच्छेद् वैष्णवं पदम् ॥
या सा तृतीया मात्रा ईशान दैवत्या कपिलावर्णेन यस्तां ध्यायते नित्यं स गच्छेद् ऐशानं पदम् । या सार्धचतुर्थीमात्रा सर्वदैवत्याव्यक्तीभूता खं विचरित शुद्धा



स्फटिक सन्निभा वर्णेन यस्तां ध्यायति नित्यं स गच्छोद् पदमनामयम् । तदेतदुपासीत मुनयो वाग्वदन्ति न तस्य ग्रहणमयं पन्था विहित उत्तरेण येन देवा यान्ति येन पितरो येन ऋषयः परमपरं परायणं चेति वालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातरूपं वरेण्यं तमात्मस्थं येनु पश्यन्ति धीरास्तेषां शान्तिः भवति नेतरेषाम् । यस्मिन् क्रोधं यां च तृष्णां क्षमां चाक्षमां हित्वा हेतुजालस्य मूलं बुद्ध्या संचितं स्थापयित्वा तु रुद्रे रुद्रमेकत्वमाहुः । रुद्रो हि शाश्वतेन वै पुराणेनेषमूर्जेण तपसा नियन्ताग्निरिति भस्म वायुरिति भस्म जलमिति भस्म व्योम इति भस्म सर्व ह वा इदं भस्म मन एतानि चक्षूंषि यस्मादव्रतमिदं पाशुपतं यद्भस्म नांगानि संस्पृशेत् तस्माद् ब्रह्म तदेतत्पाशुपतं पशुपाशविमोक्षणाय योग्नौ रुद्रो योप्सु अन्तः यः औषधीर्वीरुधमाविवेश ।

य इमा विश्वाभुवनानि चक्लृपे तस्मै रुद्राय नमोस्तु अग्नये । यो रुद्रो ग्नौ यो रुद्रः अप्सु अन्तः यो रुद्रः औषधीर्विरुध आविवेश यो रुद्र इमा विश्वा भुवनानि चक्लृपे तस्मै रुद्राय वै नमो नमः । यो रुद्रः अप्सु यो रुद्र औषध ीषु यो रुद्रो वनस्पतिषु येन रुद्रेण जगदूर्ध्व धारितं पृथिवी द्विधा त्रिधा धर्ता ध ारिता नागाः ये अन्तरिक्षं तस्मै रुद्राय वै नमो नमः।

मूधनिमस्य संसेव्याप्यथर्वा हृदयं च यत् मस्तिष्कादूर्ध्व प्रेरयत्यवमानोधिशीर्षतः तद्वा अथर्वणः शिरो देवकोश समुज्झितः । तत्प्राणोभिरक्षति शिरोन्तमथो मनः यस्मिन्निदं सर्वमोतप्रोतं तस्मादन्यः परं किंचिन्नास्ति न तस्मात्पूर्व न परं तदस्ति न भूतं नोत भव्यं यदासीत् । सहस्रपादेक मूर्धा व्याप्तं स एवेदमावरीवर्ति भूतं।

अक्षरात्संजायते कालः कालाद् व्यापक उच्यते व्यापको हि भगवान् रुद्रो भोगायमानो यदा रुद्रः शेते तदा संहार्यते प्रजाः । उच्छ्वसिते तमो भवति तमसः आपोश्वंगुल्या मथिते मथितं शिशिरे शिशिरं म यमानं फेनं भवति फेनादण्डं भवत्यण्डाद् ब्रह्मा भवति ब्रह्मणो वायुः वायोरोंकार ओंकारात् सावित्री सावित्र्याः गायत्री गायत्र्याः लोकाः भवन्ति अर्चयन्ति तपः सत्यं मधु क्षरन्ति यद् ध्रुवम् । एतद्धि परं तपः । आपो ज्योति रसोमृतं ब्रह्म भूर्भुवः स्वरोम् नम इति ।

( फलश्रुति ) य इदमथर्वशिरो ब्राह्मणोधीते अश्रोत्रियः श्रोत्रियो भवति अनुपनीत उपनीतो भवति। सः अग्निपूतो भवति सः वायुपूतो भवति सः सूर्यपूतो भवति सः सोमपूतो भवति स सत्यपूतो भवति सः सर्वैः देवैः ज्ञातो भवति । सः सर्वै वेदैरनुध्यातो भवति सः सर्वेषु तीर्थेषु स्नातो भवति। तेन सर्वैः ऋतुभिरिष्टं भवति । गायत्र्याः षष्टिसहस्राणि जप्तानि भवन्ति । प्रणवानामयुतं जप्तं भवति स चक्षुषः पंक्तिं पुनाति । आसप्तमात् पुरुषयुगान्पुनाती त्याह भगवानथर्वशिरः । सकृज्जप्त्वा एव शुचिः सः पूतः कर्मण्यो भवति द्वितीयं जप्त्वा गणाधिपत्यमवाप्नोति तृतीयं जप्त्वा एवानुप्रविशति सत्यमोम् सत्यम् ओम् सत्यं ओम् सत्यम् ।

卐 卐 卐

## ॥ पुरुषसूक्तम् ॥

This hymn of 16 verses is addressed to Purusha, a word which has numerous meanings as He who is filled with light, He whose passions are purified etc. It gives a symbolic account of how the Divinity itself has become the entire manifestation. It is said that what is manifested both animate and inanimate is only a small fraction of his glory and the rest is beyond our reach. This manifestation came about only by the symbolic sacrifice or yajna. Only by knowing this mighty Purusha can we transcend our limited mortal state .

### तैत्तिरीयारण्यम् - तृतीय प्रश्नः

ॐ तच्छं योरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवीस्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पदे । ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ सहस्त्रशीरषा पुरुषः । सहस्त्राक्षः सहस्त्रपात् । स भूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलम् । पुरुष एवेदंग सर्वम्। यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानः । यदन्नेनातिरोहति । एतावानस्य महिमा । अतोज्यायागश्च पूरुषः ॥१॥



Purusha is thousand-headed, thousands-eyed, thousand-footed;
and, pervading the earth on all sides, he exists beyond the ten directions.
Purusha, indeed, is all this, what has been and what will be,
and the Lord of immortality transcending by mortal nurture.

पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि । त्रिपादूर्ध्व उदैत्पुरुषः । पादोऽस्येहाऽऽभवात्पुनः । ततो विष्वङ्व्यक्रामत्। साशनानशने अभि । तस्माद्विराडजयात । विराजो अधि पूरुषः । स जातो अत्यरिच्यत । पश्चाद्भूमिमथो पुरः ॥२॥

Such is his magnificence, but Purusha is greater than this; all beings are a fourth of him, three-fourths—his immortality—lie in heaven. Three-fourths of Purusha ascended, the fourth part was here again and again,and, diversified in form, it moved to the animate and the inanimate *world.*From him was Viraj born, and from Viraj was born Purusha; and, as soon as born, he spread over the earth from behind and in front.

यत्पुरुषेण हविषा । देवा यामतन्वत । वसन्तो अस्यासीदाज्यम् । ग्रीष्म इध्मश्शरद्धविः । सप्तास्यासन्परिधय : । त्रिः सप्त समिधः कृताः । देवा यद्यज्ञं तन्वानाः । अबध्नन्पुरुषं पशुम् । तं यज्ञं बरहिषि प्रौक्षनं । पुरुषं जातमग्रतः ॥३॥

When with Purusha as offering the Devas performed a sacrifice, spring was the molten butter, summer the fuel, and autumn the oblation. Seven were *the sticks* of the enclosure, thrice seven the logs of wood prepared, when Devas, performing the rite, bound, as their victim, Purusha.On the grass they besprinkled him, the Sacrifice Purusha, the first born. With him the Devas sacrificed, and those Sadhyas and the Rishis.

तेन देवा अयजन्त । साध्या ऋषयश्च ये । तस्माद्यज्ञात्सर्वहुतः । संभृतं पृषदाज्यम् । पशूगस्ताग् श्चक्रे वायव्यान्। आरण्यान्ग्राम्यश्च ये। तस्माद्यज्ञात्सवर्हुतः। ऋचः सामानि जज्ञिरे । छन्दाग्ंसि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ॥४॥

From that sacrifice, fully offered, was gathered the mixed milk and butter. And animals ruled by Vayu arose the sylvan and the domestic. From that sacrifice, fully offered, the Rik and the Saman were born the Chandas was

born of that, and from that was the Yajus born.

तस्मादश्वा अजायन्त । ये के चोभयादतः । गावो ह जज्ञिरे तस्मात् । तस्माज्जाता अजावयः । यत्पुरुषं व्यदधुः । कतिधा व्यकल्पयन् । मुखं किमस्य कौ बाहू । काबूरू पादावुच्येते । ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः ॥५॥

From that were born horses, and the animals with two roes of teeth;
yea, kine were born of that, and of that were born the goat and the sheep.
When they divided Purusha, how many portions did they make?
What did they call his mouth? What his arms? and what his thighs his feet?
The Brahmana was his mouth, and his arms were made the Rajanya

ऊरू तदस्य यद्वैस्यः । पद्भ्यागं् शूद्रो अजायत । चन्द्रमा मनसो जातः । चक्षोः सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च । प्राणाद्वारयुरजायत । नाभ्या आसीदन्तारेक्षम् । शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात् । तथा लोकांग् अकल्पयन् ॥६॥

His thighs became the Vaisya, and from his feet was the Sudra born. From his mind was born the moon, and from his eye the sun. From his mouth were Indra and Agni born and Vayu was born from his breath. From his navel came the mid-air, from his head the sky was fashioned, from his feet the earth, and from his ear the quarters. Thus they formed the worlds.

वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तुपारे । सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाऽभिवदन्, यदास्ते । धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्त्रः । तमेवं विद्वानमृतं इह भवति । नान्यः पन्था अयनाय विद्यते । यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यसन् । ते ह नाकं महिमानः सचन्ते । यज्ञ पूर्वे साध्याः सन्ति देवाः ॥७॥

With sacrifice the Devas worshipped the Sacrifice,
Those wee the earliest holy ordinances.
The mighty Ones attained the height of heaven.
where the ancient Devas, the Sadhyas, abide.

अद्भ्यः संभूतः पृथिव्यै रसाच्च । विश्वकर्मणः समवर्तताधि । तस्य त्वष्टा



विदधद्रूपमेति । तत्पुरुषस्य विश्वमाजानमग्रे ।

वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात् । तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यतेऽयनाय। प्रजापतिश्चरति गर्भे अन्तः । अजायमानो बहुधा विजायते ॥८॥

तस्य धीराः परिजानन्ति योनिम् । मरीचीनां पदमिच्छन्ति वेधसः । यो देवेभ्य आतपति । यो देवानां पुरोहितः । पूर्वो यो देवेभ्यो जातः । नमो रूचय ब्राह्मये, रूचं ब्राह्मं जनयन्तः । देवो तदग्रे तदब्रुवन ।

यस्त्वैवं ब्राह्मणो विद्यात् । तस्य देवा असन् वशे ॥९॥

ह्री श्च ते लक्ष्मीश्च पत्न्यौ । अहोरात्रे पा श्वैं । नक्षत्राणि रूपम् । अ श्विनौ व्यात्तम् । इष्टं मनिषाण । अमुं मनिषाण । सर्वं मनिषाण ॥१०॥

ॐ शान्तिः शान्तिः शान्तिः ॥

## ॥ अथ श्री शिवमहिम्नस्तोत्रम् ॥

महिम्नः पारं ते परमविदुषो यद्यसदृशी
स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः ।
अथाऽवाच्यः सर्वः स्वमतिपरिणामावधि गृणन्
ममाप्येष स्तोत्रे हर निरपवादः परिकरः ॥ १ ॥

O remover of all types of miseries, what wonder is there, if the prayer to you, chanted by one who is ignorant about your greatness, isworthless! Because, even the utterance ( speech ) of Brahmaa and other gods is not able to fathom your merits ( ie, greatness ).Hence, if persons withvery limited intellect ( and I am one of them ) try to offer you a prayer,their attempt deserve your special favour . If it is so, I should not be aexception . Hence, (thinking like this ) I begin this prayer.

अतीतः पंथानं तव च महिमा वाङ्मनसयोः
अतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि ।
स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः
पदे त्वर्वाचीने पतति न मनः कस्य न वचः ॥ २ ॥

So great is your majesty that it cannot be reached by speech and mind . Even the Vedas also, having become surprised, confirm yourgreatness by only saying 'Neti', 'Neti' (not this, not this) while describing you . Who can praise this type of greatness of yours? With how many qualities is it composed? Whose subject of description can it be ? And yet even then whose mind and speech are not attached to your this new Saguna form ?

मधुस्फीता वाचः परमममृतं निर्मितवतः
तव ब्रह्मन् किं वागपि सुरगुरोर्विस्मयपदम् ।
मम त्वेतां वाणीं गुणकथनपुण्येन भवतः
पुनामीत्यर्थेऽस्मिन् पुरमथन बुद्धिर्व्यवसिता ॥ ३ ॥

O, Paramaatmaa (Greatest Soul), as you are the very creator of speech of the Vedas, which is like highest type of nectar and as sweet as honey, how can even the speech of Brahaspati (Guru, or spiritual guide of gods) surprise you ? (ie, the speech of even Brahaspati is worthless before you). O, Destroyer of Three Cities of the demons, thinking that my speech may become purified by this act, my intellect (Buddhi) has become prepared to sing your greatness . (3)



तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रलयकृत्
त्रयीवस्तु व्यस्तं तिस्रुषु गुणभिन्नासु तनुषु ।
अभव्यानामस्मिन् वरद रमणीयामरमणीं
विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः ॥ ४ ॥

O, Giver of Boons, your greatness is the cause of creation, maintenance, and destruction of the whole universe; this is supported by three Vedas (ie, Rigveda, Yajurveda, and Saamaveda); it is distributed in the three qualities (ie, Satva, Rajas and Tamas) and three bodies (of Brahmaa, VishhNuand Mahesha). Such is your greatness but certain stupid persons in this world are trying to destroy it by slander, which may be delightful to them but is really undelightful .

किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं
किमाधारो धाता सृजति किमुपादान इति च ।
अतर्क्यैश्वर्ये त्वय्यनवसर दुःस्थो हतधियः
कुतर्कोऽयं कांश्चित् मुखरयति मोहाय जगतः ॥ ५ ॥

If the Paramaatmaa creates the three worlds (ie, the whole Universe), what is his gesture ? What is his body ? What is his plan? What is his basis (support)? What are his means (instruments,resources) ? These are the useless questions raised by some stupid critics, in order to mislead people, against one (i.e., you) who always remains incompatible to senses .

अजन्मानो लोकाः किमवयववन्तोऽपि जगतां
अधिष्ठातारं किं भवविधिरनादृत्य भवति ।
अनीशो वा कुर्याद् भुवनजनने कः परिकरो
यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे ॥ ६ ॥

O, Best Of The Gods, are the seven Lokas (It is believed that there are seven worlds in this Universe, namely, Bhooloka, Bhuvarloka, Svargaloka, Maharloka, Janaloka, Tapaloka, and Satyaloka) unborn ? Was the birth of the Universe independent of its Lord (ie, You) ? If it was so, then what were the means by which it was created that the stupid critics are creating doubts about you? (ie, you are the only creater of the whole Universe).

त्रयी साङ्ख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यादृजुकुटिल नानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥ ७ ॥

The different practices based on the three Vedas, SaMkhya, Yoga, Pashupata-mata, VaishhNava-mata etc . are but different paths (to reach to

the Greatest Truth) and people on account of their different aptitude choose from them whatever they think best and deserved to be accepted . But as the sea is the final resting place for all types of streams , You are the only reaching place for all people whichever path,straight or zigzag, they may accept .

महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः
कपालं चेतीयत्तव वरद तन्त्रोपकरणम् ।
सुरास्तां तामृद्धिं दधति तु भवद्भ्रूप्रणिहितां
न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ॥ ८ ॥

O, Giver of the Boons, the bull, the parts of a cot, chisel, the elephant-skin, Ashes, the serpent, the skull : these are the articles of your house-hold . And yet gods get all their riches merely by the movement of your eye-brows . Really, false desires for worldly things do not deceive (mislead) one who is always is absorbed in his soul ( ie, the Yogi- in fact You ). (8)

ध्रुवं कश्चित् सर्वं सकलमपरस्त्वध्रुवमिदं
परो ध्रौव्याऽध्रौव्ये जगति गदति व्यस्तविषये ।
समस्तेऽप्येतस्मिन् पुरमथन तैर्विस्मित इव
स्तुवन् जिह्रेमि त्वां न खलु ननु धृष्टा मुखरता ॥ ९ ॥

O, Destroyer Of ( Three ) Cities, some persons call this Universe eternal ( ever lasting), others call it temporary, and yet others call it both eternal and temporary . Hence, being surprised ( per- plexed ) by these contradictory opinions on this subject, I am really becoming immodest in loquaciously praising You .

तवैश्वर्यं यत्नाद् यदुपरि विरिञ्चिर्हरिरधः
परिच्छेतुं यातावनिलमनलस्कन्धवपुषः ।
ततो भक्तिश्रद्धा-भरगुरु-गृणद्भ्यां गिरिश यत्
स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति ॥ १० ॥

Brahma and VishhNu wanted to measure your wealth i.e.greatness . You took the form of Fire and your whole body was a column of fire extending over space . While Brahma took the form of a swan and flew high to see the top(head), VishhNu took the form of a boar and dug up downwards to see the bottom (feet).Neither could succeed.(While VishhNu confessed the truth, Brahma falsely claimed that he had found the top and persuaded the Ketaki flower to bear false witness.Shiva punished Brahma by removing one of his 5 heads and ordered that henceforth the Ketaki flower should not be used for his worship).When ultimately both praised you with full devotion and faith, you



stood before them revealing your normal form . O, mountain-dweller, does not toeing your line always bear fruit? (10)

अयत्नादासाद्य त्रिभुवनमवैरव्यतिकरं
दशास्यो यद्बाहूनभृत-रणकण्डू-परवशान् ।
शिरःपद्मश्रेणी-रचितचरणाम्भोरुह-बलेः
स्थिरायास्त्वद्भक्तेस्त्रिपुरहर विस्फूर्जितमिदम् ॥ ११ ॥

Oh,destroyer of the three cities! The effortless achievement of the ten-headed Ravana in making the three worlds enemyless( having conquered) and his arrant eagerness for further fight by stretching his arms,are but the result of his constant devotion to your lotus feet at which he ever laid the lotus garland consisting of his 10 heads!

अमुष्य त्वत्सेवा-समधिगतसारं भुजवनं
बलात् कैलासेऽपि त्वदधिवसतौ विक्रमयतः ।
अलभ्यापातालेऽप्यलसचलितांगुष्ठशिरसि
प्रतिष्ठा त्वय्यासीद् ध्रुवमुपचितो मुह्यति खलः ॥ १२ ॥

Having obtained all his prowess through worshipping you, RavaNa once dared to test the power of his arms at your own dwelling place(Kailas Mountain). When he tried to lift it up, you just moved a toe of your foot on a head of his and lo! Ravana could not find rest or peace even in the nether-world . Surely, power maddens the wicked . Finally RavaNa reestablished his faith in you .

यदृद्धिं सुत्राम्णो वरद परमोच्चैरपि सतीं
अधश्चक्रे बाणः परिजनविधेयत्रिभुवनः ।
न तच्चित्रं तस्मिन् वरिवसितरि त्वच्चरणयोः
न कस्याप्युन्नत्यै भवति शिरसस्त्वय्यवनतिः ॥ १३ ॥

Oh boon-giver! BaaNa, the demon king made all the three worlds serve him with all their attendants and even the greatest wealth of Indra was a trifle for him . It was not a surprise at all, since he ‘dwelt’ in your feet; who does not rise in life by bowing his head to you?

अकाण्ड-ब्रह्माण्ड-क्षयचकित-देवासुरकृपा
विधेयस्याऽऽसीद् यस्त्रिनयन विषं संहृतवतः ।
स कल्माषः कण्ठे तव न कुरुते न श्रियमहो
विकारोऽपि श्लाघ्यो भुवन-भय- भङ्ग- व्यसनिनः ॥ १४ ॥

When the ocean was being churned by the gods and demons for

‘amRit.h’(nectar),various objects came forth: at one point, there emerged the ‘kAlakUTa’ poison which threatened to consume everything . The gods as well as the demons were stunned at the prospect of the entire universe coming to an end, O, three-eyed lord, who is ever compassionate and engaged in removing the fear of the world, you took it(poison) on yourself by consuming it . (On Parvati’s holding Shiva’s throat at that point, the poison froze blue there itself and Shiva became ‘neelakanTha’). It is strange that this stain in your neck, though appearing to be a deformity, actually adds to your richness and personality .

असिद्धार्था नैव क्वचिदपि सदेवासुरनरे
निवर्तन्ते नित्यं जगति जयिनो यस्य विशिखाः ।
स पश्यन्नीश त्वामितरसुरसाधारणमभूत्
स्मरः स्मर्तव्यात्मा न हि वशिषु पथ्यः परिभवः ॥ १५ ॥

The cupid’s(love-god ‘manmatha’s) (flower) arrows never return unaccomplished whether the victims were gods or demons or men . However O, master! he has now become just a remembered soul (without body),since he looked upon you as any other ordinary god, shot his arrow and got burnt to ashes,in no time . Insulting, masters (who have controlled their senses), does one no good .

मही पादाघाताद् व्रजति सहसा संशयपदं
पदं विष्णोर्भ्राम्यद् भुज-परिघ-रुग्ण-ग्रह- गणम् ।
मुहुर्द्यौर्दौस्थ्यं यात्यनिभृत-जटा-ताडित-तटा
जगद्रक्षायै त्वं नटसि ननु वामैव विभुता ॥ १६ ॥

You dance for protecting the world, but strangely, your glorious act appears to produce the opposite result in that the earth suddenly struck by your dancing feet doubts that it is coming to an end; even VishhNu’s domain is shaken in fear when your mace like arms bruise the planets; the godly region feels miserable when its banks are struck by your agitated matted locks (of hair)!

वियद्व्यापी तारा-गण-गुणित-फेनोद्गम-रुचिः
प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते ।
जगद्द्वीपाकारं जलधिवलयं तेन कृतमिति
अनेनैवोन्नेयं धृतमहिम दिव्यं तव वपुः ॥ १७ ॥

The divine river flows extensively through the sky and its charm is enhanced by the illumination of the foam by the groups of stars . (Brought down to the earth by the King Bhagiratha by propitiating Lord Shiva and



known as Ganga) it creates many islands and whirlpools on the earth . The same turbulent river appears like a mere droplet of water on your head This itself shows how lofty and divine your body(form) is!

रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो
रथाङ्गे चन्द्रार्कौ रथ-चरण-पाणिः शर इति ।
दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बर विधिः
विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभुधियः ॥ १८ ॥

When you wanted to burn the three cities, you had the earth as the chariot, Brahma as the charioteer,the Meru mountain as the bow, the sun and the moon as the parts of the chariot and VishhNu himself(who holds the chariot-wheeel in his hand -Sudarshan chakra?), as the arrow . Why this demonstrative show when you as the dictator of everything, could have done the job as a trifle? The Lord’s greatness is not dependent on anybody or anything . ( Incidentally there is a view that the burning of the three cities would refer to the burning of three kinds of bodies of man i.e.‘sthUla sharIra’, ‘sUkshma sharIra’ and ‘kAraNa sharIra’).

हरिस्ते साहस्रं कमल बलिमाधाय पदयोः
यदेकोने तस्मिन् निजमुदहरन्नेत्रकमलम् ।
गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषः
त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगताम् ॥ १९ ॥

VishhNu once brought 1000 lotuses and was placing them at your feet; after placing 999 flowers he found that one was missing; he plucked out one of his own eyes and offered it as a lotus; this supreme exemplification of devotion on his part was transformed into the wheel (sudarshana chakra) in his hand, which he uses for protecting the world .

क्रतौ सुप्ते जाग्रत् त्वमसि फलयोगे क्रतुमतां
क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते ।
अतस्त्वां सम्प्रेक्ष्य क्रतुषु फलदान-प्रतिभुवं
श्रुतौ श्रद्धां बध्वा दृढपरिकरः कर्मसु जनः ॥ २० ॥

You ensure that there is a connection between cause and effect and hence when men perform a sacrifice they obtain good results . Otherwise how can there be future result for a past action? Thus on seeing your power in rewarding people performing sacrificial worship, with good results, men

believe in Vedas and firmly engage themselves in various worshipful acts .

क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृतां
ऋषीणामार्त्विज्यं शरणद सदस्याः सुर-गणाः ।
क्रतुभ्रंशस्त्वत्तः क्रतुफल-विधान-व्यसनिनः
ध्रुवं कर्तुं श्रद्धा विधुरमभिचाराय हि मखाः ॥ २१ ॥

All the same,O Protector . though you exert to reward all sacrifices . those done without faith in you become counter-productive, as exemplified in the case of the sacrifice performed by Daksha; Daksha was well-versed in the art of sacrifices and himself the Lord of Creation; besides, he was the chief performer: the great maharishis were the priests and the various gods were the participants! (Daksha did not invite Shiva and insulted him greatly; thus enraged, Shiva destroyed the sacrifice and Daksha too).

प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं
गतं रोहिद् भूतां रिरमयिषुमृष्यस्य वपुषा ।
धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं
त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः ॥ २२ ॥

O, Protector! Once Brahma became infatuated with his own daughter . When she fled taking the form of a female deer he also took the form of a male deer and chased her . You took the form of a hunter and went after him, with a bow in hand . Struck by your arrow and very much frightened, Brahma fled to the sky taking the form of a star . Even today he stands frightened by you .

स्वलावण्याशंसा धृतधनुषमह्नाय तृणवत्
पुरः प्लुष्टं दृष्ट्वा पुरमथन पुष्पायुधमपि ।
यदि स्त्रैणं देवी यमनिरत-देहार्ध-दृटनात्
अवैति त्वामद्धा बत वरद मुग्धा युवतयः ॥ २३ ॥

O, destroyer of the three cities! Boon-giver! Practitioner of austerities! Before the very eyes of Parvati, you reduced Manmatha (the god of love) to ashes,the moment he tried to arouse passion in you for Parvati, by shooting his famous flower arrows . Even after witnessing this, if Parvati, thinks that you are attracted by her physical charm, on the basis of your sharing half the body with her, certainly women are under self- delusion .

श्मशानेष्वाक्रीडा स्मरहर पिशाचाः सहचराः
चिता-भस्मालेपः स्रगपि नृकरोटी-परिकरः ।



अमङ्गल्यं शीलं तव भवतु नामैवमखिलं
तथापि स्मर्तॄणां वरद परमं मङ्गलमसि ॥ २४ ॥

O,boon giver! O,destroyer of Cupid! You play in the burning ghats . your friends are the ghosts . Your body is smeared with the ashes of the dead bodies . Your garland is of human skulls . Every aspect of your character is thus inauspicious . Let it be . It does not matter . Because, with all these known oddness, you are quick to grant all auspicious things to the people who just think of you . (It is interesting to note here that in his Devi aparaadha kshamApana stotra Shankaracharya says that,despite his poor and deficient possessions,Shiva got the power to grant boons entirely because because of his having taken the hand of Parvathi in marriage; in the previous shloka, Pushhpadanta calls it naive on the part of Parvati, if she thinks that Shiva is attracted by her charm simply because he is sharing half the body with her.This dichotomy etc . is due to the custom that when a particular lord is to be extolled, the other gods are to be belittled to some extent).

मनः प्रत्यक् चित्ते सविधमविधायात्त-मरुतः
प्रहृष्यद्रोमाणः प्रमद-सलिलोत्सङ्गति-दृशः ।
यदालोक्याह्लादं ह्रद इव निमज्ज्यामृतमये
दधत्यन्तस्तत्त्वं किमपि यमिनस्तत् किल भवान् ॥ २५ ॥

The great yogis regulate their breath, control and still their mind, look inward and enjoy the bliss with their hair standing on edge and eyes filled with tears of joy . It looks as though they are immersed in nectar . That bliss which they see in their heart and exult thus, is verily you Yourself!

त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवहः
त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च ।
परिच्छिन्नामेवं त्वयि परिणता बिभ्रति गिरं
न विद्मस्तत्तत्त्वं वयमिह तु यत् त्वं न भवसि ॥ २६ ॥

You are the sun, the moon, the air, the fire, the water, the sky(ether/space), and the earth (the five elements or 'bhUtA's). You are the Self which is omnipresent . Thus people describe in words every attribute as yours . On the other hand, I do not know any fundamental principle or thing or substance, which you are not!

त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरान्
अकाराद्यैर्वर्णैस्त्रिभिरभिदधत् तीर्णविकृति ।
तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः
समस्त-व्यस्तं त्वां शरणद गृणात्योमिति पदम् ॥ २७ ॥

O, grantor of refuge and protection! The word ‘OM’ consists of the three letters ‘a’, ‘u’ and ‘m’. It refers to the three Vedas(Rik, YajuH and SAma), the three states (Jaagrat.h, Swapna, and sushhupti-awakened, dreaming and sleeping),the three worlds(BhUH, bhuvaH and suvaH) and the three gods (Brahma, VishhNu amd Mahesha).It refers to you yourself both through the individual letters as well as collectively; in the latter form (i.e . the total word ‘OM’) it refers to your omnipresent absolute nature, as the fourth state of existence i.e ‘turIyaM’ (sleep-like yet awakened and alert state, as a fully- drawn bow).

भवः शर्वो रुद्रः पशुपतिरथोग्रः सहमहान्
तथा भीमेशानाविति यदभिधानाष्टकमिदम् ।
अमुष्मिन् प्रत्येकं प्रविचरति देव श्रुतिरपि
प्रियायास्मैधाम्ने प्रणिहित-नमस्योऽस्मि भवते ॥ २८ ॥

I salute you as the dear abode of the following 8 names:bhava, sharva, rudra, pashupati, ugra, sahamahAn.h, bhiima, and Ishaana; the ‘Vedas’ also discusses individually about these names .

नमो नेदिष्ठाय प्रियदव दविष्ठाय च नमः
नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः ।
नमो वर्षिष्ठाय त्रिनयन यविष्ठाय च नमः
नमः सर्वस्मै ते तदिदमतिसर्वाय च नमः ॥ २९ ॥

O, destroyer of Cupid! O, the three-eyed one! Salutations to you, who is the forest-lover, the nearest and the farthest; the minutest and the biggest, the oldest and the youngest; salutations to you who is everything and beyond everything!

बहुल-रजसे विश्वोत्पत्तौ भवाय नमो नमः
प्रबल-तमसे तत् संहारे हराय नमो नमः ।
जन-सुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नमः
प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः ॥ ३० ॥

Salutations to you in the name of’Bhava’ in as much as you create the world by taking the ‘rajas’ as the dominant quality; salutations to you in the name of ‘Hara’ in as much as you destroy the world by taking the ‘tamas’ as the dominant quality; salutations to you in the name of ‘MRiDa’, in as much as you maintain and protect the world by taking ‘satva’ as the dominant quality . Again salutations to you in the name of Shiva in as much as you are beyond the above-mentioned three qualities and are the seat of the supreme bliss .



कृश-परिणति-चेतः क्लेशवश्यं क्व चेदं
क्व च तव गुण-सीमोल्लङ्घिनी शश्वदृद्धिः ।
इति चकितममन्दीकृत्य मां भक्तिराधाद्
वरद चरणयोस्ते वाक्य-पुष्पोपहारम् ॥ ३१ ॥

O, boon-giver! I was very perplexed to sing your praise considering my little awareness and afflicted mind vis-a-vis your ever increasing limitless quality; however, my devotion to you made me set aside this diffidence and place these floral lines at your feet .

असित-गिरि-समं स्यात् कज्जलं सिन्धु-पात्रे
सुर-तरुवर-शाखा लेखनी पत्रमुर्वी ।
लिखति यदि गृहीत्वा शारदा सर्वकालं
तदपि तव गुणानामीश पारं न याति ॥ ३२ ॥

O, great master! Even, if one were to assume that the blue mountain , the ocean, the heavenly tree and the earth are the ink,the ink-pot, the pen and the paper respectively and the goddess of learning (Saraswati) herself is the writer,she will not be able to reach the frontiers of your greatness,however long she were to write!

असुर-सुर-मुनीन्द्रैरर्चितस्येन्दु-मौलेः
ग्रथित-गुणमहिम्नो निर्गुणस्येश्वरस्य ।
सकल-गण-वरिष्ठः पुष्पदन्ताभिधानः
रुचिरमलघुवृत्तैः स्तोत्रमेतच्चकार ॥ ३३ ॥

The best one among all groups(Gandharva?), Pushhpadanta by name, composed this charming hymn in none too short metres, in praise of the great lord who wears the moon in his head(Shiva), who is worshipped and glorified by all demons, gods and sages and who is beyond all attributes and forms .

अहरहरनवद्यं धूर्जटेः स्तोत्रमेतत्
पठति परमभक्त्या शुद्ध-चित्तः पुमान् यः ।
स भवति शिवलोके रुद्रतुल्यस्तथाऽत्र
प्रचुरतर-धनायुः पुत्रवान् कीर्तिमांश्च ॥ ३४ ॥

Whoever reads this faultless hymn of Shiva daily, with pure mind and great devotion, ultimately reaches Shiva’s domain and becomes equal to him; in this world, he is endowed with children, great wealth, long life and fame .

महेशान्नापरो देवो महिम्नो नापरा स्तुतिः ।
अघोरान्नापरो मन्त्रो नास्ति तत्त्वं गुरोः परम् ॥ ३५ ॥

दीक्षा दानं तपस्तीर्थं ज्ञानं यागादिकाः क्रियाः ।
महिम्नस्तव पाठस्य कलां नार्हन्ति षोडशीम् ॥ ३६ ॥

Initiation(into spiritual development), charity, penance, pilgrimage,spiritual knowledge and religious acts like sacrifices are not capable of yielding even one-sixteenth of the return that will result from the reading of this hymn .

कुसुमदशन-नामा सर्व-गन्धर्व-राजः
शशिधरवर-मौलेर्देवदेवस्य दासः ।
स खलु निज-महिम्नो भ्रष्ट एवास्य रोषात्
स्तवनमिदमकार्षीद् दिव्य-दिव्यं महिम्नः ॥ ३७ ॥

Kusumadanta(equivalent of Pushhpadanta) was the king of all Gandharvas and he was a devotee of the Lord of lords, Shiva, who wears the baby moon (with a few digits only) in his head . He fell from his glorious position due to Shiva's wrath at his misconduct . It was then that the Gandharva composed this hymn which is the most divine .

सुरगुरुमभिपूज्य स्वर्ग-मोक्षैक-हेतुं
पठति यदि मनुष्यः प्राञ्जलिर्नान्य-चेताः ।
व्रजति शिव-समीपं किन्नरैः स्तूयमानः
स्तवनमिदममोघं पुष्पदन्तप्रणीतम् ॥ ३८ ॥

If an aspirant for heaven and liberation, worships Shiva,the teacher of gods, at first and then reads this unfailing hymn, composed by Pushhpadanta, with folded hands and single-mindedness, he attains Shiva's abode, being praised by 'kinnaras'(a group of semi-gods known for their singing talent).

आसमाप्तमिदं स्तोत्रं पुण्यं गन्धर्व-भाषितम् ।
अनौपम्यं मनोहारि सर्वमीश्वरवर्णनम् ॥ ३९ ॥

Here ends this meritorious,charming and incomparable hymn, uttered by the Gandharva, all in description of the great master .

इत्येषा वाङ्मयी पूजा श्रीमच्छङ्कर-पादयोः ।
अर्पिता तेन देवेशः प्रीयतां मे सदाशिवः ॥ ४० ॥

Thus, this worship in the form of words, is dedicated at the feet of Shri Shankara; may the ever-auspicious lord of the gods be pleased with this .

तव तत्त्वं न जानामि कीदृशोऽसि महेश्वर ।
यादृशोऽसि महादेव तादृशाय नमो नमः ॥ ४१ ॥



I do not know the truth of your nature and how you are . O, great God! My Salutations are to that nature of yours of which you really are . (41)

एककालं द्विकालं वा त्रिकालं यः पठेन्नरः ।
सर्वपाप-विनिर्मुक्तः शिव लोके महीयते ॥ ४२ ॥

Whoever reads this once, twice or thrice (in a day) revels in the domain of Shiva, bereft of all sins .

श्री पुष्पदन्त-मुख-पङ्कज-निर्गतेन
स्तोत्रेण किल्बिष-हरेण हर-प्रियेण ।
कण्ठस्थितेन पठितेन समाहितेन
सुप्रीणितो भवति भूतपतिर्महेशः ॥ ४३ ॥

This hymn which is dear to Shiva, has emerged out of the lotus-like mouth of Pushhpadanta and is capable of removing all sins . May the lord of all beings become greatly pleased with anyone who has learnt this by heart and/or reads or recalls this with single-mindedness!

॥ इति श्री पुष्पदन्त विरचितं शिवमहिम्नः स्तोत्रं समाप्तम् ॥

## शिवमानसपूजा

रत्नैः कल्पितमासनं हिमजलैः स्नानं च दिव्याम्बरं
नानारत्नविभूषितं मृगमदामोदाङ्कितं चन्दनम्।
जातीचम्पकबिल्वपत्ररचितं पुष्पं च धूपं तथा
दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम्॥ १॥

सौवर्णे नवरत्नखण्डरचिते पात्रे घृतं पायसं
भक्ष्यं पञ्चविधं पयोदधियुतं रम्भाफलं पानकम्।
शाकानामयुतं जलं रुचिकरं कर्पूरखण्डोज्ज्वलं
ताम्बूलं मनसा मया विरचितं भक्त्या प्रभो स्वीकुरु॥ २॥

छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलम्
वीणाभेरिमृदङ्गकाहलकला गीतं च नृत्यं तथा।
साष्टाङ्गं प्रणतिः स्तुतिर्बहुविधा ह्येतत्समस्तं मया
सङ्कल्पेन समर्पितं तव विभो पूजां गृहाण प्रभो॥ ३॥

आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः।
सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो
यद्यत्कर्म करोमि तत्तदखिलं शम्भो तवाराधनम्॥ ४॥

करचरण कृतं वाक्कायजं कर्मजं वा।
श्रवणनयनजं वा मानसं वापराधम्।
विहितमविहितं वा सर्वमेतत्क्षमस्व।
जय जय करुणाब्धे श्रीमहादेवशम्भो॥ ५॥

॥ इति श्रीमच्छङ्कराचार्यविरचिता शिवमानसपूजा समाप्ता॥





जटाटवीगलज्जलप्रवाहितस्थले गलेऽवलम्ब्य लम्बितां भुजङ्गतुङ्गमालिकाम्।
डमड्डमड्डमड्डमन्निनावमड्डमर्वयं चकार चण्डताण्डवं तनोतु नः शिवम्॥१॥
जटाकटाहसम्भ्रमभ्रमन्निलिम्पनिर्झरी विलोलवीचिवल्लरी विराजमानमूर्द्धनि।
धगद्धगद्धगज्ज्वलल्ललाटपट्टपावके किशोरचन्द्रशेखरे रतिः प्रतिक्षणं मम॥२॥
धराधरेन्द्रनन्दिनीविलासबन्धुबन्धुर-स्फुरद्दिगन्तसन्ततिप्रमोदमानमानसे।
कृपाकटाक्षधोरणीनिरुद्धदुर्धरापदिक्वचिद्दिगम्बरे मनोविनोदमेतु वस्तुनि॥३॥
जटाभुजङ्गपिङ्गलस्फुरत्फणामणिप्रभा-कदम्बकुङ्कुमद्रवप्रलिप्तदिग्वधूमुखे।
मदान्धसिन्धुरस्फुरत्तरीयमेदुरे मनो विनोदमद्भुतं बिभुर्त भूतभर्तरि॥४॥
सहस्त्रलोचनप्रभृत्य शेषलेखशेखर-प्रसूनधूलिधोरणी विधूसराङ्घ्रिपीठभूः।
भुजङ्गराजमालया निबद्धजाटजूटकः श्रियैचिरायजायतां चकोरबन्धुशेखरः॥५॥
ललाटचत्वरज्वलद्धनञ्जयस्फुलिङ्गभा निपीतपञ्चसायकं नमन्निलिम्पनायकम्।
सुधामयूखलेखया विराजमानशेखरं महाकपालिसम्पदेशिरोजटालमस्तु नः॥६॥
करालभालपट्टिका धगद्धगद्धगज्ज्वल-द्धनञ्जयाहुतीकृत प्रचण्डपञ्चसायके।
धराधरेन्द्रनन्दिनी कुचाग्रचित्रपक प्रकल्पनैकशिल्पिनि त्रिलोचने रतिमर्म॥७॥
नवीनमेघमण्डली निरुद्धदुर्धरस्फुर-त्कुहूनिशीथिनीतमः प्रबन्धबद्धकन्धरः।
निलिम्पनिर्झरीधरस्तनोतुकृत्तिसिन्धुरः कलानिधानबन्धुरः श्रियंजगद्धुरन्धरः॥८॥
प्रफुल्लनीलपङ्कज प्रपञ्चकालिमप्रभा-वलम्बिकण्ठकन्दलीरुचिप्रबद्धकन्धरम्।
स्मरच्छिदंपुरच्छिद ंभवच्छिदं मखच्छिदंगजच्छिदान्धकच्छिदंतमन्तकच्छिदंभजे॥९॥
अखर्वसर्वमङ्गला कलाकदम्बमञ्जरी-रसप्रवाहमाधुरीविजृम्भणामधृव्रतम्।
स्मरान्तकंपुरान्तकंभवान्तकंमखान्तकंगजान्तकान्धकान्तकंतमन्तकान्तकंभजे॥१०॥
जयत्वभ्रविभ्रमभ्रमद्भुङ्गमश्वस-द्विनिर्गमत्क्रमस्फुरत्कराल-भालहव्यवाट्।
धिमिद्धिमिद्धिमिद्ध्वनन्मृदङ्गतुङ्गमङ्गलध्वनिक्रमप्रवर्तितप्रचण्डताण्डवःशिवः॥११॥
दृषद्विचत्रतल्योर्भुजङ्गमौत्ति कस्त्रजो-र्गरिष्ठ रत्नलोष्ठयोः सुहृद्विपक्षपक्षयोः।
तृणारविन्दचक्षुषोःप्रजामहीमहेन्द्रयोः समप्रवृत्तिकः कदासदाशिवं भजाम्यहम्॥१२॥
कदानिलिम्पनिर्झरीनिकुञ्जकोटरेवसन् विमुक्तदुर्मतिःसदाशिरःस्थञ्जलिंवहन्।
विलोललोललोचनोललामभाललग्नकः शिवेतिमन्त्रमुच्चरन्कदासुखीभवाम्यहम्।१३।
इमं हि नित्यमेवमुक्तमुक्तमोक्तमंस्तवं - पठन्स्मरन्ब्रुवन्नरो विशुद्धिमेति सन्ततम्।
हरेगुरौसुभक्तिमाशु यातिनान्यथागतिं विमोहनं हिदेहिनां सुशङ्करस्यचिन्तनम्।१४।
पूजावसानसमये दशवक्त्रगीतं यः शम्भुपूजनपरं पठति प्रदोषे।
तस्य स्थिरां रथगजेन्द्रतुरङ्गयुक्तां लक्ष्मीं सदैव सुमुखीं प्रददाति शम्भुः॥१५॥

卐卐卐

## अर्धनारीश्वरस्तोत्रम्

चाम्पेयगौरार्धशरीरकायै कर्पूरगौरार्धशरीरकाय ।
धम्मिल्लकायै च जटाधराय नमः शिवायै च नमः शिवाय ॥१॥
कस्तूरिकाकुङ्कुमचर्चितायै चितारजः पुञ्जविचर्चिताय ।
कृतस्मरायै विकृतस्मराय नमः शिवायै च नमः शिवाय ॥२॥
झणत्क्वणत्कङ्कणनूपुरायै पादाब्जराजत्फणिनूपुराय ।
हेमाङ्गदायै भुजगाङ्गदाय नमः शिवायै च नमः शिवाय ॥३॥
विशालनीलोत्पललोचनायै विकासिपङ्केहलोचनाय ।
समेक्षणायै विषमेक्षणाय नमः शिवायै च नमः शिवाय ॥४॥
मन्दारमालाकलितालकायै कपालमालाङ्कितकन्धराय ।
दिव्याम्बरायै च दिगम्बरायः नमः शिवायै च नमः शिवाय ॥५॥
अम्भोधरश्यामलकुन्तलायै तटित्प्रभाताम्रजटाधराय ।
निरीश्वरायै निखिलेश्वरायः नमः शिवायै च नमः शिवाय ॥६॥
प्रपञ्चसृष्ट्यन्मखलास्यकायै समस्तसंहारकताण्डवाय ।
जगज्जनन्यै जगदेकपित्रे नमः शिवायै च नमः शिवाय ॥७॥
प्रदीप्तरत्नोज्जवलकुण्डलायै स्फुरन्महापन्नगभूषणाय ।
शिवान्वितायै च शिवान्विताय नमः शिवायै च नमः शिवाय ॥८॥
एतत्पठेदष्टकमिदं यो भक्त्या स मान्यो भुवि दीर्घजीवी ।
प्राप्नोति सौभाग्यमनन्तकालं भूयात्सदा तस्य समस्तसिद्धि : ॥९॥

卐卐卐

## निर्वाणषट्कम्

मनोबुद्ध्यहङ्कारचित्तानि नाहं न च श्रोत्रजिह्वे न च घ्राणनेत्रे ।
न च व्योमभूमी न तेजो न वायुश्चिदानन्दरूपः शिवोऽहं शिवोऽम् ॥१॥
न च प्राणसंज्ञो न वै पञ्चवायुर्नवा सप्तधातुर्न वा पञ्चकोषाः ।
न वाक्पाणिपादं न चोपस्थपायुर्श्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ।२॥
न मे द्वेषरागौ न मे लोभमोहौ मदो नैव मे नैव मात्सर्यभावः ।
नधर्मोनचार्थो नकामो न मोक्षश्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥३॥
न पुण्यं न पापं न सौख्यं न दुःखं न मन्त्रो न तीर्थं न वेदा न यज्ञाः ।
अहं भोजनं नैव भोज्यं न भोक्तार्श्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥४॥
न मृत्युर्नशङ्का न मे जातिभेदः पिता नैव मे नैव माता न जन्म ।
न बन्धुर्न मित्रं गुरुर्नैव शिष्यश्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥५॥
अहं निर्विकल्पो निराकाररूपो विभत्वाच्च सर्वत्र सर्वेन्द्रिणाम् ।
न चासङ्गतं नैव मुक्तिर्न मेयश्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥६॥



## वेदसारशिवस्तवः

पशूनां पतिं पापनाशं परेशं गजेन्द्रस्य कृत्तिं वसानं वरेण्यम् ।
जटाजूटमध्ये स्फुरद्गाङ्गवारिं महादेवमेकं स्मरामि स्मरारिम् ॥१॥
महेशं सुरेशं सुरारार्तिनाशं विभुं वि श्वनाथं विभूत्यङ्गभूषम् ।
विरूपाक्षमिन्द्वर्कवह्नित्रिनेत्रं सदानन्दमीडे प्रभुं प ञ्चवक्त्रम् ॥२॥
गिरीशं गणेशं गले नीलवर्णं गवेन्द्राधिरूढं गणातीतरूपम् ।
भवं भास्वरं भस्मना भूषिताङ्गं भवानीकलत्रं भजे प ञ्चवक्त्रम् ॥३॥
शिवाकान्त शम्भो शशाङ्कार्धमौले महेशान शलिन् जटाजूटधारिन् ।
त्वमेव जगद्व्यापको विश्वरूप प्रसीद प्रसीद प्रभो पूर्णरूप ॥४॥
परात्मानमेकं जगद्बीजमाद्यं निरीहं निराकारमोङ्कारवेद्यम् ।
यतो जायते पाल्यते येन विश्वं तमीशं भजे लीयते यत्र विश्वम् ॥५॥
न भूमिर्न चापो न वह्निर्न वायुर्न चाकाशमास्ते न तन्द्रा न निद्रा ।
न ग्रीष्मो न शीतं न देशो न वेषो न यस्यास्ति मूर्तिस्त्रमूर्तिं तमीडे ॥६॥
अजं शाश्वतं कारणं कारणानां शिवं केवलं भासकं भासकानाम् ।
तुरीयं तमःपारमाद्यन्तहीनं प्रपद्ये परं पावनं द्वैतहीनम् ॥७॥
नमस्ते नमस्ते विभो विश्वमूर्ते नमस्ते नमस्ते चिदानन्दमूर्ते ।
नमस्ते नमस्ते तपोयोगगम्य नमस्ते नमस्ते श्रुतिज्ञानगम्य ॥८॥
प्रभो शूलपाणे विभो विश्वनाथ महादेव शम्भो महेश त्रिनेत्र ।
शिवाकान्त शान्त स्मरारे पुरारे त्वदन्यो वरेण्यो न मान्यो न गण्यः ॥९॥
शम्भो महेश करुणामय शूलपाणे गौरीपते पशुपते पशुपाशनाशिन् ।
काशीपते करुणया जगदेतकस्त्वं हंसि पासि विदधासि महेश्वरोऽसि ॥१०॥
त्वत्तो जगद्भवति देव भव स्मरारे त्वय्यैव तिष्ठिति जगन्मृड विश्वनाथ।
त्वय्येव गच्छति लयं जगदेतदीश लिङ्गात्मकं हर चराचरवि श्वरूपिन् ॥११॥

卐卐卐卐卐

## शिवपञ्चाक्षरस्तोत्रम्

नागेन्द्रहाराय त्रिलोचनाय भस्माङ्गरागाय महे श्वराय ।
नित्याय शुद्धाय दिगम्बराय तस्मै 'न' काराय नमः शिवाय ॥१॥
मन्दाकिनीसलिलचन्दनचर्चिताय नन्दी श्वरप्रमथनाथमहे श्वराय ।
मन्दारपुष्पबहुपुष्पसुपूजिताय तस्मै 'म' काराय नमः शिवाय ॥२॥
शिवाय गौरीवदनाब्जवृन्द सूर्याय दक्षाध्वरनाशकाय ।
श्रीनीलकण्ठाय वृषध्वजाय तस्मै 'शि' काराय नमः शिवाय ॥३॥
वसिष्ठकुम्भोद्भवगौतमार्यमुनीन्द्रदेवार्चितशेखराय ।
चन्द्रार्कवै श्वानरलोचनाय तस्मै 'व' काराय नमः शिवाय ॥४॥
यक्षस्वरूपाय जटाधराय पिनाकहस्ताय सनातनाय ।

दिव्याय देवाय दिगम्बराय तस्मै 'य' काराय नमः शिवाय ॥५॥
प ञ्चाक्षरमिदं पुण्यं यः पठेच्छिवसन्निधौ ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥६॥

卐卐卐卐卐

## शिवाष्टकम्

तस्मै नमः परमकारणकारणाय दीप्तोज्जवलज्ज्वलितपिङ्गललोचनाय ।
नागेन्द्रहारकृतकुण्डलभूषणाय ब्रह्मेन्द्रविष्णुवरदाय नमः शिवाय ॥१॥
श्रीमत्प्रसन्नशशिपन्नगभूषणाय शैलेन्द्रजावदनचुम्बितलोचनाय ।
कैलासमन्दरमहेन्द्रनिकेतनाय लोकत्रयार्तिहरणाय नमः शिवाय ॥२॥
पद्मावदातमणिकुण्डलगोवृषाय कृष्णागरुप्रचुरचन्दनचर्चिताय ।
भस्मानुषक्तविकचोत्पलमल्लिकाय नीलाब्जकण्ठसदृशाय नमः शिवाय ॥३॥
लम्बत्सपिङ्गलजटामुकुटोत्कटाय दंष्ट्राकरालविकटोत्कटभैरवाय ।
व्याघ्राजिनाम्बरधराय मनोहराय त्रैलोक्यनाथनमिताय नमः शिवाय ॥४॥
दक्षप्रजापतिमहामखनाशनाय क्षिप्रं महात्रिपुरदानवघातनाय ।
ब्रह्मोर्जितोर्ध्वगकरोटिनिकृन्तनाय योगाय योगनमिताय नमः शिवाय ॥५॥
संसारसृष्टिघटनापरिवर्तनाय रक्षः पिशाचगणसिद्धसमाकुलाय ।
सिद्धोरगग्रहगणेन्द्रनिषेविताय शार्दूलचर्मवसनाय नमः शिवाय ॥६॥
भस्माङ्गरागकृतरूपमनोहराय सौम्यावदातवनमाश्रितमाश्रिताय ।
गौरीकटाक्षनयनार्धनिरीक्षणाय गोक्षीरधारधवलाय नमः शिवाय ॥७॥
आदित्यसोमवरुणानिलसेविताय यज्ञाग्निहोत्रवरधूमनिकेतनाय ।
ऋक्सामवेदमुनिभिः स्तुतिसंयुताय गोपाय गोपनमिताय नमः शिवाय ॥८॥
शिवाष्टकमिदं पुण्यं यः पठेच्छिवसन्निधौ ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥९॥

卐卐卐卐卐

## श्रीरुद्राष्टकम्

नमामीशमीशान निर्वाणरूपं विभुं व्यापकं ब्रह्म वेदस्वरूपं ।
निजं निर्गुणं निर्विकल्पं निरीहं चिदाकाशमाकाशवासं भजेऽहं ॥१॥
निराकारमोङ्कारमूलं तुरीयं गिरा ज्ञान गोतीतमीशं गिरीशं ।
करालं महाकाल कालं कृपालं गुणागार संसारपारं नतोऽहं ॥२॥
तुषाराद्रि संकाश गौरं गभीरं मनोभूत कोटि प्रभा श्री शरीरं ।
स्फुरन्मौलि कल्लोलिनी चारु गंगा लसद्भालबालेन्दु कंठे भुजंगा ॥३॥



चलत्कुंडलं भ्रू सुनेत्रं विशालं प्रसन्नाननं नीलकंठं दयालं ।
मृगाधीशचर्माम्बरं मुंडमालं प्रियं शंकरं सर्वनाथं भजामि ॥४॥
प्रचंडं प्रकृष्टं प्रगल्भं परेशं अखंडं अजं भानुकोटिप्रकाशं ।
त्रयः शूल निर्मूलनं शूलपाणिं भजेऽहं भवानीपतिं भावगम्यं ॥५॥
कलातीत कल्याण कल्पान्तकारी सदा सज्जनानन्ददाता पुरारी ।
चिदानंद संदोह मोहापहारी प्रसीद प्रसीद प्रभो मन्मथारी ॥६॥
न यावद् उमानाथ पादारविन्दं भजंतीह लोके परे वा नराणाम् ।
न तावत्सुखं शान्ति सन्तापनाशं प्रसीद प्रभो सर्वभूताधिवासं ॥७॥
न जानामि योगं जपं नैव पूजां नतोऽहं सदा सर्वदा शंभु तुभ्यं ।
जरा जन्म दुःखौघ तातप्यमानं प्रभो पाहि आपन्नमामीश शंभो ॥८॥
रुद्राष्टकमिदं प्रोक्तं विप्रेण हरतोषये ।
ये पठन्ति नरा भक्त्या तेषां शम्भुः प्रसीदति ॥९॥

## शिवसहस्त्रनाम

अथ महाभारते अनुशासनपर्वे महर्षि तण्डीकृत शिवसहस्त्रनाम
स्थिरः स्थाणु प्रभुर्भीमः प्रवरो वरदो वरः ।
सर्वात्मा सर्वविख्यातः सर्व सर्वकरो भवः ॥१॥
जटी चर्मी शिखंडी च सर्वांगः सर्वभावनः ।
हर श्च हरिणाक्ष श्च सर्वभूतहरः प्रभुः ॥२॥
प्रवृत्तिश्च निवृत्तिश्च नियतो शाश्वतो ध्रुवः ।
श्मशानवासी भगवान् खचरो गोचरोऽर्दनः ॥३॥
अभिवाद्यो महाकर्मा तपस्वी भूतभावनः ।
उन्मत्तवेष प्रच्छन्नः सर्वलोकप्रजापतिः ॥४॥
महारूपो महाकायो वृषरूपो महायशाः ।
महात्मा सर्वभूता वि श्वरूपो महाहनुः ॥५॥
लोकपालोऽतर्हितात्मा प्रसादो हयगर्दभिः ।
पवित्रं च महांश्चैव नियमो नियमाश्रितः ॥६॥
सर्वकर्मा स्वयंभूत आदिरादिकरो निधिः ।
सहस्त्राक्षो विशालाक्षः सोमो नक्षत्रसाधकः ॥७॥
चन्द्रः सूर्यः शनिः केतु ग्रहो ग्रहपतिर्वरः ।
अत्रिरत्या नमस्कर्ता मृगणार्पणोऽनघः ॥८॥
महापता घोरतपा अदीनो दीनसाधकः ।
संवत्सरकरो मन्त्रः प्रमाणं परमं तपः ॥९॥
योगी योज्यो महाबीजो महारेता महाबलः ।
सुवर्णरेताः सर्वज्ञः सुबीजो बीजवाहनः ॥१०॥

दशबाहुस्त्वनिमिषो नीलकण्ठः उमापतिः ।
विश्वरूपः स्वयं श्रेष्ठो बलवीरोऽबलो गणाः ॥११॥
गणकर्ता गणपतिर्दिग्वासाः काम एव च ।
मंत्रवित्परमो मन्त्रः सर्वभावकरो हरः ॥१२॥
कमण्डलुधरो धन्वी बाणहस्तः कपालवान् ।
अशनी शतघ्नी खड्गी पट्टिशी चायुधी महान् ॥१३॥
स्त्रुवहस्तः सुरूपश्च तेजस्तेजकरो निधिः ।
उष्णीषी च सुवक्त्रश्च उदग्रो विनतस्तथा ॥१४॥
दीर्घ श्च हरिकेषश्च सुतीर्थः कृष्ण एव च ।
श्रृगालरूपः सिद्धार्थो मुण्डः सर्वशुभंङ्करः ॥१५॥
अजश्च बहुरूपश्च गन्धारी कपर्द्यपि ।
ऊर्ध्वरता ऊर्ध्वलिङ्ग ऊर्ध्वशायी नभःस्थलः ॥१६॥
त्रिजटी चीरवासाश्च रुद्रः सेनापतिर्विभुः ।
अहश्चरो नक्तंचरस्तिग्ममन्युः सुवर्चसः ॥१७॥
गजहा दैत्यहा कालो लोकधाता गुणाकरः ।
सिंहशार्दूलरुपश्च आर्द्रचर्माम्बरावृतः ॥१८॥
कालयोगी महानादः सर्वकामश्चतुष्पर्थः ।
निशाचरः प्रेतचारी भूतचारी महेश्वरः ॥१९॥
बहुभूतो बहुधरः स्वर्भानुरमितो गतिः ।
नृत्यप्रियो नृत्यनर्तो नर्तकः सर्वलालसः ॥२०॥
घोरो महातपाः पाशो नितयो गिरिरूहो नभः ।
सहस्त्रहस्तो विजयो व्यवसायो ह्यतन्द्रिः ॥२१॥
अधर्षणो धर्षणात्मा यज्ञहा कामनाशकः ।
दक्षयागापहारी च सुसहो मध्यमस्तथा ॥२२॥
तेजो पहारी बलहा मुदितोऽर्थोऽजितोऽवर ।
गंभीरघोषो गंभीरो गंभीरबलवाहनः ॥२३॥
न्यग्रोधरूपो न्यग्रोधो वृक्षकर्णस्थितिर्विभुः ।
सुतीक्ष्णदशन श्चैव महाकायो महाननः ॥२४॥
वि श्वक्सेनो हरिर्यज्ञः संयुगापीडवाहनः ।
तीक्ष्णतापश्च हर्यश्वः सहायः कर्मकालवित् ॥२५॥
विष्णुप्रसादितो यज्ञः समुद्रो वड़वामुखः ।
हुताशनसहायाश्चः सहायश्च प्रशंतात्मा हुताशनः ॥२६॥
उग्रतेजा महातेजा जन्यो विजयकालवित् ।
ज्योतिषामयनं सिद्धि सर्वविग्रह एव च ॥२७॥
शिखी मुण्डी जटी ज्वाली मूर्तिजो मूद्धिगो बली ।



वेणवी पणवी ताली खली कालकंटकटः ॥२८॥
नक्षत्रविग्रहमतिर्गुणबुद्धिर्लयोऽगमः ।
प्रजापर्तिविश्वबाहुविभागः सर्वगोऽमुखः ॥२९॥
विमोचनः सुसरणो हिरण्यकवचोद्भवः।
मेद्रजो बलचारी च महीचारी स्त्रुतस्तथा ॥३०॥
सर्वतूर्यनिनादी च सर्वातोद्यपरिग्रहः ।
व्यालरूपो गुहावासी गुहामाली तरङ्गवित् ॥३१॥
त्रिदशस्त्रिकालधृक्र्मसर्वबन्धविमोचनः ।
बंधनस्त्वसुरेंद्राणाम् युधिशत्रुविनाशनः ॥३२॥
सांख्यप्रसादो दुर्वासाः सर्वसाधुनिषेवितः ।
प्रस्कन्दनो विभागज्ञो अतुल्यो यज्ञविभागवित् ॥३३॥
सर्वसः सर्वचारी दुर्वासा वासवोऽमरः ।
हैमो केमकरोऽयज्ञः सर्वधारी धरोत्तमः ॥३४॥
लोहिताक्षो महाक्षश्च विजयाक्षो विशारदः ।
संहग्रो निग्रहः कर्ता सर्पचीरनिवासनः ॥३५॥
मुख्योऽमुख्यश्च देहश्च काहलिः सर्वकामदः ।
सर्वकालप्रसादश्च सुबलो बलरूपधृक् ॥३६॥
सर्वकामवरश्चैव सर्वदः सर्वतोमुखः ।
आकाशनिर्विरूपश्च निपाती ह्यवशः खगः ॥३७॥
रौद्ररूपोंशुरादित्यो बहुरश्मिः सुवर्चसी ।
वसुवेगो महावेगो मनोवेगो निशाचरः ॥३८॥
सर्ववासी श्रियावासी उपदेशकरोऽकरः ।
मुनिरात्मनिरालोकः संभग्न श्च सहस्त्रदः ॥३९॥
पक्षी च पक्षरूपश्च अतिदीप्तो विशापतिः ।
उन्मादो मदनः कामो ह्यश्वत्थोऽर्थकरोयशः ॥४०॥
वामदेवश्च वामश्च प्राग्दक्षिण श्च वामनः ।
सिद्धयोगी महर्षिश्च सिदार्थः सिद्धसाधकः ॥४१॥
भिक्षुश्च भिक्षुरूपश्च विपणो मृदुरव्ययः ।
महासेनो विशाखश्च षष्टिभागो गवां पतिः ॥४२॥
वज्रहस्तश्च विष्कम्भी चमूस्तम्भव एव च ।
वृत्तावृत्तकरस्तालो मधुर्मधुकलोचनः ॥४३॥
वाचस्पतयो वाजसनो नित्यमाश्रमपूजितः ।
ब्रह्मचारी लोकचारी सर्वचारी विचारवित् ॥४४॥
ईशानः ईश्वरः कालो निशाचरी पिनाकवान् । ि
नमित्तस्थो निमित्तं च नन्दिर्नन्दिकरो हरिः ॥४५॥

नन्दीश्वरश्च नन्दी च नन्दनो नन्दिर्वद्धनः ।
भगहारी निहंता च कालो ब्रह्मा पितामहः ॥४६॥
चतुर्मुखो महालिंग श्चारू लिंगस्तथैव च ।
लिंगाध्यक्षः सुराध्यक्षो योगाध्यक्षो युगावहः ॥४७॥
बीजाध्यक्षो बीजकर्ता अध्यात्मानुगतो बलः ।
इतिहासः सकल्पश्च गौतमोऽथनिशाकरः ॥४८॥
दम्भो ह्यदम्भो वैदम्भो वश्यो वशकरः कलिः ।
लोककर्ता पशुपर्तिमहाकर्ता ह्यनौषधः ॥४९॥
अक्षरं परमं ब्रह्म बलवच्छक एवं च ।
नीतिर्ह्यनीतिः शुद्धात्मा शुद्धो मन्ययो गतागतः ॥५०॥
बहुप्रसादः सुस्वप्नो दर्पणोऽथ त्वमित्रजित् ।
वेदकारो मन्त्रकारो विद्वान् समरमर्दनः ॥५१॥
महामेघनिवासी च महाघोरो वशीकरः ।
अग्निज्वालो म!हाज्वालो अतिधूम्रो हुतोहविः ॥५२॥
वृषणः शंकरो नित्यं वर्चस्वी नित्यंवर्चस्वी धूमकेतनः।
नीलस्तथांङ्गलुब्धश्च शोभनो निरवग्रहः ॥५३॥
स्वस्तिदः स्वस्तिभावश्च भागी भागकरो लघुः ।
उत्संगश्च महांगश्च महागर्भपरायण : ॥५४॥
कृष्णावर्णः सुवर्णश्च इंद्रियं सर्वदेहिनाम् ।
महापादो महाहस्तो महाकायो महायशाः ॥५५॥
महामूर्धा महामात्रो महानेत्रो निशालयः ।
महान्तको महाकर्णो महोष्ठश्च महाहनुः ॥५६॥
महानासो महाकम्बुर्महाग्रीवः श्मशानभाक् ।
महावक्षा महोरस्कः ह्यन्तरात्मा मृगालयः ॥५७॥
लंबनो लंबितोिष्ठश्च महामायः पयोनिधिः ।
महादन्तो महादंष्ट्रो महाजिव्हो महामुखः ॥५८॥
महानखो महारोमा महाकेशो महाजटाः ।
प्रसन्नश्च प्रसादश्च प्रत्ययो गिरिसाधनः ॥५९॥
स्नेहनोऽस्नेहश्चैव अजितश्च महामुनिः ।
वृक्षाकारो वृक्षकेतुरनलो वायुवाहनः ॥६०॥
गण्डली मेरूधामा च देवाधिपतिरेव च ।
अथर्वशीर्षः सामास्य ऋक्सहस्त्रामितेक्षणः ॥६१॥
यजुः पादभुजो गुह्यः प्रकाशो जङ्गमस्तथा ।
अमोघार्थ प्रसादश्च अभिगम्यः सुदर्शनः ॥६२॥
उपकारः प्रियः सर्वः कनकः काञ्चनच्छविः ।



नाभिर्नन्दिकरो भावः पुष्करस्थपतिः स्थिरः ॥६३॥
द्वादशस्त्रासनश्चाद्यो यज्ञो यासमाहितः ।
नक्तं कलिश्च कालत्च मकरः कालपूजितः ॥६४॥
सगणो गणकारश्च भूतवाहनसारथिः ।
भस्मशयो भस्मगोप्ता भस्मभूतस्तरूर्गणः ॥६५॥
लोकपास्तथालोको महात्मा सर्वपूजितः ।
शुक्लस्त्रिशुक्लः सम्पन्नः शुचिर्भूतनिषेवितः ॥६६॥
आश्रतमस्थः क्रियावस्थो विश्वकर्ममतिर्वरः ।
विशालशाखस्ताम्रोष्ठो ह्यम्बुजालः सुनिश्चलः ॥६७॥
कपिलः कपिशः शुक्लः आयुश्चैव परोऽपरः ।
गन्धर्वो ह्यदितिस्तार्क्ष्य सुविज्ञेयः सुशारदः ॥६८॥
परश्वधायुधो देवो अनुकारी सुबन्ध्वः ।
तुम्बवीणो महाक्रोध ऊर्ध्वरेता जलेशयः ॥६९॥
उग्रो वंशकरो वंशो वंशनादो ह्यनिन्दितः ।
सर्वांगरूपो मायावी सुहृदो ह्यानिलो अनलः ॥७०॥
बन्धनो बन्धकर्ता च सुबन्धनविमोचनः ।
सयज्ञारिः सकामारिर्महादंष्ट्रो महायुधः ॥॥७१॥
बहुधा निन्दितः शर्व शंकरः शंकरोऽधनः ।
अमरेशो महादेवो विश्वदेवः सुरारिहा ॥७२॥
अहिर्बुध्न्योऽनिलाभश्च चेतिकानो हविस्तथा ।
अजैकपाच्च कापाली त्रिशंकुरजितः शिवः ॥७३॥
धन्वन्तरिर्धूमकेतुः स्कन्दो वैश्रवणस्तथा ।
धाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा ध्रुवो धरः ॥७४॥
प्रभावः सर्वगो वायुरर्यमा सविता रविः ।
उषंगुश्च विधाता च मान्धाता भूतभावनः ॥७५॥
विभुर्वर्णविभावी च सर्वकामगुणावह ।
पद्मनाभो महागर्भश्चन्द्रवक्त्रोऽनिलोऽनलः ॥७६॥
बलवांश्योपशान्तष्च पुराणः पुण्यचश्चुरी ।
कुरूकर्ता कुरुवासी कुरूभूतो गुणोषधः ॥७७॥
सर्वाशयो दर्भचारी सर्वेषां प्राणिनां प्रतिः ।
देवदेवः सुखासक्तः सदसत्सर्वरत्नवित् ॥७८॥
कैलासगिरिवासी च हिमवद्गि रिसंश्रयः ।
कूलहारी कूलकर्ता बहुविधो बहुप्रदः ॥७९॥
वणिजो वर्धकी वृक्षो बकुलधन्दनश्छदः ।
सारग्रीवो महाजत्रुरलोलश्च महौषधः ॥८०॥

सिद्धार्थकारी सिद्धार्थश्छन्दोव्याकरणोत्तरः ।
सिंहनादः सिंहदंष्ट्र सिंहगः सिंहवाहनः ॥८१॥
प्रभावात्मा जगत्कालस्थालो लोकहितस्तरु ।
सारङ्गो नवचक्राङ्गः केतुमाली सभावनः ॥८२॥
भूतालयो भूतपतिरहोरात्रमनिन्दितः ।
वाहिता सर्वभूतानां निलयश्च विभुर्भवः ॥८३॥
अमोघः संयतोह्यश्वो भोजनःप्राणधारणः ।
धृतिमान्मतिमान् दक्षः सत्कृतश्च युगाधिपः ॥८४॥
गोपालीगोपतिर्ग्रामो गोचर्मवसनो हरिः ।
हिरण्यबाहुश्च तथा गुहापालः प्रवेशिनाम् ॥८५॥
प्रकृष्टारिर्महाहर्षो जितकामो जितेन्द्रियः ।
गान्धारश्च सुवासश्च तपःसक्तो रतिर्नरः ॥८६॥
महागीतो महानृत्यो ह्यप्सगणसेवितः ।
महाकेतुर्महाधातुर्नैकसानुचर श्चलः ॥८७॥
आवेदनीयादेशः सर्वगन्धसुखावहः ।
तोरणस्तारणो वातः परिधी पतिखेचरः ॥८८॥
संयोगो वर्धनो वृद्धो अतिवृद्धो गुणाधिकः ।
नित्यआत्मसहायश्च देवासुरपतिः पतिः ॥८९॥
युक्तश्च युक्तबाहुश्च देवो दिविसुपर्वणः ।
आषाढ़श्व सुषाढ़श्च ध्रुवोऽथ हरिणो हरः ॥९०॥
वपुरावर्तमानेभ्यो वसुश्रेष्ठी महापथः ।
शिरोहारी विमर्शश्च सर्वलक्षणलक्षितः ॥९१॥
अक्षश्च रथयोगी च सर्वयोगी महाबलः ।
समाम्नायोऽसमाम्नायस्तीर्थदेवो महारथः ॥९२॥
निर्जीवो जीवनो मन्त्रः शुभाक्षो बहुकर्कशः ।
रत्नप्रभूतो रत्नाङ्गो महार्णवनिपानवित् ॥९३॥
मूलं विशालो ह्यमृतो व्यक्तास्तपोनिधिः ।
ओरोहणोऽधिरोहश्च शीलधारी महायशाः ॥९४॥
सेनाकल्पो महाकल्पो योगो युगकरो हरिः ।
युगरूपो महारूपो महानागहनोऽवधः ॥९५॥
न्यायनिर्वपणः पादः पण्डितो ह्यचलोपमः ।
बहुमालो महामालः शशी हरसुलोचनः ॥९६॥
विस्तारो लवणः कूपस्त्रियुगः सफलोदयः । ि
त्रलोचनो विषण्णाङ्गो मणिविद्धो जटाधरः ॥९७॥
बिन्दुर्विसगः सुमुखः शरः सर्वायुधः सहः ।



निवेदनः सुखाजातः सुगन्धारो महाधनुः ॥९८॥
गन्धपाली च भगवानुत्थानः सर्वकर्मणाम् ।
मन्थानो बहुलो वायुः सकलः सर्वलोचनः ॥९९॥
तलस्तालः करस्थाली ऊर्ध्वसंहननो महान् ।
छत्रं सुच्छत्रो विख्यातो लोकः सर्वाश्रयः क्रमः ॥१००॥
मुण्डो विरुपो विकृतो दण्डी कुण्डी विकुर्वणः ।
हर्यक्षः ककुभो वज्री शतजिव्हः सहस्त्रपात् ॥१०१॥
सहस्त्रमूर्धा देवेन्द्रः सर्वदेवमयो गुरुः ।
सहस्त्रबाहु सर्वाङ्गः शरण्यः सर्वलोककृत् ॥१०२॥
पवित्रं त्रिककुन्मन्त्रः कनिष्ठः कृष्णपिंगलः ।
ब्रह्मदण्डविनिर्माता शतघ्नीपाशशक्तिमान् ॥१०३॥
पद्मगर्भो महागर्भो ब्रह्मगर्भो जलोद्भवः ।
गभस्तिर्ब्रह्मकृद् ब्रह्मी ब्रह्मविद् ब्राह्मणो गतिः ॥१०४॥
अन्नरूपो नैकात्मा तिग्मतेजाः स्वयंभुवः ।
ऊर्ध्वगात्मा पशुपतिर्वातरंहा मनोजवः ॥१०५॥
चन्दनी पद्मनालाग्रः सुरभ्युत्तरणो नरः ।
कर्णिकारमहास्त्रग्वी नीलमौलिः पिनाकधृत् ॥१०६॥
उमापतिरुमाकान्तो जान्हवीधृदुमाधवः ।
वरो वराहो वरदो वरेण्यः सुमहास्वनः ॥१०७॥
महाप्रसादो दमनः शत्रुहा  श्वेतपिंगलः ।
पीतात्मा परमात्मा च प्रयतात्मा प्रधानधृत् ॥१०८॥
सर्वपार्श्वमुखत्र्यक्षो धर्मसाधारणो वरः ।
चराचरात्मा सूक्ष्मात्मा अमृतो गोवृषे श्वरः ॥१०९॥
साध्यर्षिर्वसुरादित्यो विवस्वांसवितामृतः ।
व्यासः सर्गः सुंसक्षेपो विस्तरः पर्ययो नरः ॥११०॥
ऋतुः संवत्सरो मास पक्षः संख्यासमापनः ।
कला काष्ठा लवा मात्रा मुहर्ताहः क्षपाः क्षणाः ॥१११॥
विश्वक्षेत्रं प्रभाबीजं लिंगमाद्यस्तु निर्गमः ।
सदसद् व्यक्तमण्व्यक्तं पिता माता पितामहः ॥११२॥
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्ट्पम् ।
निर्वाणं ह्लादनश्चैव ब्रह्मलोकः परा गतिः ॥११३॥
देवासुरविर्निमाता देवासुरपरायणः ।
देवासुरगुरुर्देवो देवासुरनमस्कृतः ॥११४॥
देवासुरमहामात्रो देवासुरगणाश्रयः ।
देवासुरगणाध्यक्षो देवासुरगणाग्रणीः ॥११५॥

देवातिदेवो देवर्षि देवासुरवरप्रदः ।
देवासुरेश्वरो विश्वो देवासुरमहे श्वरः ॥११६॥
सर्वदेवमयोऽचिन्त्यो देवतात्माऽत्मसंभवः ।
उदिभत् त्रिविक्रमो वैद्यो विरजो नीरजोऽमरः ॥११७॥
ईऽयो हस्तीश्वरो व्याघ्रो देवसिंहो नरर्षभः ।
विबुधोऽग्रवरः सूक्ष्मः सर्वदेवस्तपोमयः ॥११८॥
सुयुक्तः शोभनो वज्री प्रासानां प्रभवोऽव्ययः ।
गुहः कान्तो निजः सर्गः पवित्रं सर्वपापनः ॥११९॥
श्रृंगी श्रृङ्गप्रियो बभ्रू राजराजो निरामयः ।
अभिरामः सुरगणो विरामः सर्वसाधनः ॥१२०॥
ललाटाक्षो विश्वदेवो हरिणो ब्रह्मवर्चसः ।
स्थावराणां पतिश्चैव नियमेन्द्रियवर्धनः ॥१२१॥
सिद्धार्थः सिद्धभूतार्थो अचिन्त्य सत्यव्रतः शुचिः ।
व्रताधिपः परंब्रह्म भक्तानां परमा गतिः ॥१२२॥
विमुक्तो मुक्ततेजाश्च श्रीमान् श्रीवर्धनो जगत् ॥१२३॥

नारायणो नाम नरो नराणां प्रसिद्ध चौरः कथितः पृथिव्याम् ।
अनेकजन्मार्जित पापपुञ्ज हरत्यशेषं स्मरणेन पुसाम्॥ पाण्डवगीता

एको हि रुद्रोन द्वितीयाय तस्थुर्थ इमाँल्लोकानीशत ईशनीभिः ।
प्रत्यङ् जनास्तिष्ठति संचुकोचांतकाले संसृज्य विश्वा भुवनानि गोपाः ॥
विश्वतश्चक्षुरूत विश्वतोमुखो विश्वतोबाहुरूत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमि जनयन्देव एकः ॥
यो देवानां प्रभव श्चोद्भव श्च वि श्वाधिपो रूद्रो महर्षिः ।
हिरण्यगर्भ जनयामास पूर्व स नो बुद्ध्या शुभया संयुनक्त ॥
ततः परं ब्रह्मपरं बृहन्त यथानिकायं सर्वभूतेषु गूढ़म् ।
वि श्वस्यैक परिवेष्टितारमीशं तं ज्ञात्वामृता भवन्ति ॥
सर्वानन शिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी स भगवास्तस्मात्सर्वगतः शिवः ॥
महान्प्रभुवै पुरुषः सत्त्वस्यैष प्रर्वतकः ।
सुनिर्मलामिमां प्राप्तिमीशानो ज्योतिरव्ययः ॥
पुरुष एवेद सर्वं यद्भूत यच्च भव्यम् ।



उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
सर्वस्य प्रभुमीशानं सर्वस्य शरणं वृहत् ॥

अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स श्रृणोत्यकर्णः ।
स वृत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्यं पुरुषं महान्तम् ॥

अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रंतु पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥

मायां तु प्रकृतिं विद्यान्मायिनं तु महे श्वरम् ।
तस्यावयवभूतैस्तु व्याप्त सर्वमिदं जगत् ॥

यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं स च वि चैति सर्वम् ।
तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति ॥
यो देवानां प्रभवा श्चोद्भव श्च वि श्वाधिपो रुद्रो महर्षिः ।
हिरण्यगर्भ पश्यत जायमानं स नो बुद्धया शुभया संयुनक्त ॥

सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये विश्वस्य स्त्रष्टारमनेकरूपं ।
विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति ॥

स एव काले भुवनस्य गोप्ता वि श्वधिपः सर्वभूतेषु गूढ़ ।
यस्मिन्युक्ता ब्रह्मर्षयो देवता श्च तमेव ज्ञात्वा मृत्युपाशांश्छिनत्ति ॥

घृतात्परं मण्डमिवातिसूक्ष्मं ज्ञात्वा शिव सर्वभूतेषु गूढ़म् ।
वि श्वस्यैक परिवेष्टिताएं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥

यदातमस्तन्न दिवा न रात्रिर्न सन्न चासर्ि श्छव एवं केवलः ।

तदन्तर तत्सवितुर्वरण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी ॥

तमीश्वराणां परमं महे श्वरं तं देवतानां परमं च दैवतम् ।
पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ॥
न तस्य कार्यं करणं च विद्यते न तत्समश्चाम्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविर्धव श्रूयते स्वभाविकी ज्ञानबलक्रिया च ॥

एको देवः सर्वभूतेषु गूढ़ सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुण श्च ॥

नित्यो नित्यानां चेतन श्चतनानामेको बहूनां यो विदधाति कामान् ।
तत्कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशेः ॥

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भानित कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥

एको हंसो भुवनस्यास्य मध्ये स एवाग्निः सलिले संनिविष्टंः ।
तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥

स विश्वकृद्वि श्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः ।
प्रधानक्षेत्रपतिर्गुणेश संसारमोक्षस्थितिबन्धहेतुः ॥

स तन्मयो ह्यमृतः ईशसंस्थो ज्ञः सर्वगो भुवनस्यास्य गोप्ता ।
य ईशे अस्य जगतो नित्यमेव नान्यो हेतु विद्यते ईशनाय ॥

निश्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।
अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् ॥

## Selections from Bhagwadgita

ॐ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशम् ।
विश्वाधारं गगनसदृशं मघवर्णं शुभांगम् ।
लक्ष्मीकान्तं कमलनयनं योगीभिर्ध्यानगम्यम् ।
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥ २-१२ ॥

There was never a time when I, you, or these kings did not exist; nor shall we ever cease to exist in the future. (2.12)

न जायते म्रियते वा कदाचिन् नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ २-२० ॥

The Atma is neither born nor does it die at any time, nor having been it will cease to exist again. It is unborn, eternal, permanent, and primeval. The Atma is not destroyed when the body is destroyed. (2.20)

वासांसि जीर्णानि यथा विहाय  नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णानि अन्यानि संयाति नवानि देही ॥ २-२२ ॥

Just as a person puts on new garments after discarding the old ones, similarly Atma acquires new bodies after casting away the old bodies. (2.22)

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २-२३ ॥
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २-२४ ॥

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २-२५ ॥

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ २-३७ ॥



कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ २-४७ ॥

You have Adhikaara over your respective duty only, but no control or claim over the results. The fruits of work should not be your motive. You should never be inactive. (2.47)

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ २-४८ ॥
बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ २-५० ॥

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ २-५६ ॥

A person whose mind is unperturbed by sorrow, who does not crave pleasures, and who is free from attachment, fear, and anger; such a person is called a sage of steady Prajna. (2.56)

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ २-५७ ॥

Those who are not attached to anything, who are neither elated by getting desired results nor troubled by undesired results, their Prajna is deemed steady. (2.57)

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते ॥ २-६२ ॥

One develops attachment to sense objects by thinking about sense objects. Desire for sense objects comes from attachment to sense objects, and anger comes from unfulfilled desires. (2.62)

क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ २-६३ ॥
या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ २-६९ ॥
आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥ २-७० ॥

One attains peace in whose mind all desires enter without creating any disturbance, as river waters enter the full ocean without creating a disturbance. One who desires material objects is never peaceful.

विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः।
निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥ २-७१ ॥

One who abandons all desires and becomes free from longing and the feeling of 'I' and 'my' attains peace. (2.71)

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ ३-२२ ॥

O Arjuna, there is nothing in the three worlds (earth, heaven, and the upper regions) that should be done by Me, nor there is anything unobtained that I should obtain, yet I engage in action. (3.22)

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥ ४-५ ॥

The Supreme Lord said: Both you and I have taken many births. I remember them all, O Arjuna, but you do not remember. (4.05)

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ४-६ ॥

Though I am eternal, imperishable, and the Lord of all beings; yet I (voluntarily) manifest by controlling My own material nature using My Yoga-Maya. (See also 10.14) (4.06)

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥ ४-७ ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ ४-८ ॥
न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ ४-१४ ॥

Works do not bind Me, because I have no desire for the fruits of work. The one who understands this truth is (also) not bound by Karma. (4.14)

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत्॥ ४-१८ ॥

Action is selfish work that produces Karmic bondage, detached action is unselfish work or Seva that leads to nirvana, and forbidden action is harmful to society. The one who sees inaction in action, and action in inaction, is a wise person. Such



a person is a yogi and has accomplished everything. (4.18)

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ ४-२४ ॥
योगसंन्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम्।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥ ४-४१ ॥

Karma does not bind one who has renounced work (by renouncing the fruits of work) through Karma-yoga; whose doubt is completely destroyed by knowledge; and who is Self-realized, O Arjuna. (4.41)

तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनात्मनः।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४-४२ ॥

Therefore, resort to Karma-yoga and cut the ignorance-born doubt abiding in your heart by the sword of Self-knowledge, and get up (to fight), O Arjuna. (4.42)

जितात्मनः प्रशान्तस्य परमात्मा समाहितः।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ६-७ ॥

One who has control over the mind is tranquil in heat and cold, in pleasure and pain, and in honor and dishonor; and is ever steadfast with the Supreme Self. (6.07)

सङ्कल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ ६-२४ ॥

Totally abandoning all selfish desires, and completely restraining the senses (from the sense objects) by the intellect; (6.24)

शनैः शनैरुपरमेद् बुद्ध्या धृतिगृहीतया।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्॥ ६-२५ ॥

One gradually attains tranquillity of mind by keeping the mind fully absorbed in the Self by means of a well-trained (and purified) intellect, and thinking of nothing else. (6.25)

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम्।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्॥ ६-२६ ॥

Wheresoever this restless and unsteady mind wanders away, one should (gently) bring it back to the reflection of the Supreme. (6.26)

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम्।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम्॥ ६-२७॥

Supreme bliss comes to a Self-realized yogi whose mind is tranquil, whose desires are under control, and who is free from sin (or faults). (6.27)

युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते॥ ६-२८॥

Such a sinless yogi, who constantly engages the mind with the Self, easily enjoys the infinite bliss of contact with Brahman. (6.28)

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः॥ ६-२९॥

Because of perceiving the (same) Self (abiding) in all beings and all beings (abiding) in the (same) Self; a yogi, who is in union with the Self, sees everybeing with an equal eye. (6.29)

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति॥ ६-३०॥

Those who see Me in everything and see everything in Me, are not separated from Me and I am not separated from them. (6.30)

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते॥ ६-३१॥
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन।
सुखं वा यदि वा दुःखं स योगी परमो मतः॥ ६-३२॥

One is considered the best yogi who regards every being like oneself, and who can feel the pain and pleasures of others as one's own, O Arjuna. (6.32)

एतद्योनीनि भूतानि सर्वाणीत्युपधारय।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा॥ ७-६॥

Know that all creatures have evolved from this twofold energy, and Brahman is the origin as well as the dissolution of the entire universe. (See also 13.26) (7.06)

दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥ ७-१४॥

My divine Maya consisting of three Gunas or states of mind is difficult to overcome. Only they who surrender unto Me cross over this Maya. (7.14)

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम्॥ ७-२९॥

Veiled by My divine Maya, I am not known by all. Therefore, the ignorant one does not know Me as the unborn and eternal Brahman. (7.25)

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः॥ ७-३०॥

The steadfast persons, who know that Brahman is everything, the Adhibhoota, the Adhidaiva, and the Adhiyajna, remember Me even at the time of death (and attain Me). (See also 8.04) (7.30)

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम्॥ ९-१५॥

Some worship Me by knowledge sacrifice. Others worship the infinite as the one in all (or non-dual), as the master of all (or dual), and in various other ways. (9.15)

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम्।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम्॥ ९-१६॥

I am the ritual, I am the Yajna, I am the offering, I am the herb, I am the mantra, I am the Ghee, I am the fire, and I am the oblation.(9.16)

पिताहमस्य जगतो माता धाता पितामहः।
वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च॥ ९-१७॥

I am the supporter of the universe, the father, the mother, and the grandfather. I am the object of knowledge, the purifier, the sacred syllable OM, and also the Rig, the Yajur, and the Sama Vedas. (9.17)

गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम्॥ ९-१८॥

I am the goal, the supporter, the Lord, the witness, the abode, the refuge, the friend, the origin, the dissolution, the foundation, the substratum, and the imperishable seed. (9.18)

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन॥ ९-१९॥

I give heat, I send as well as withhold the rain, I am immortality as well as

death, I am also both the Sat and the Asat, O Arjuna. (9.19)

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ ९-२२ ॥

To those ever steadfast devotees, who always remember or worship Me with single-minded contemplation, I personally take responsibility for their welfare. (9.22)

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ ९-२४ ॥

Because I alone am the enjoyer of all Yajna, and the Lord. But, people do not know My true transcendental nature. Therefore, they fall (into the repeated cycles of birth and death). (9.24)

यान्ति देवव्रता देवान्पितॄन्यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥ ९-२५ ॥

Worshippers of the demigods go to the demigods, the worshippers of the ancestors go to the ancestors, and the worshippers of the ghosts go to the ghosts, but My devotees come to Me (and are not born again). (See also 8.16) (9.25)

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ ९-२६ ॥

Whosoever offers Me a leaf, a flower, a fruit, or water with devotion; I accept and eat the offering of devotion by the pure-hearted. (9.26)

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ ९-२७ ॥

O Arjuna, whatever you do, whatever you eat, whatever you offer as oblation t!o the sacred fire, whatever charity you give, whatever austerity you perform, do all that as an offering unto Me.

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ ९-२८ ॥

By this attitude of complete renunciation (or Samnyasa-yoga) you shall be freed from the bondage, good and bad, of Karma. You shall be liberated, and come to Me. (9.28)



समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ ९-२९ ॥

The Self is present equally in all beings. There is no one hateful or dear to Me. But, those who worship Me with devotion, they are with Me and I am also with them. (See also 7.18) (9.29)

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ९-३० ॥

Even if the most sinful person resolves to worship Me with single-minded loving devotion, such a person must be regarded as a saint because of making the right resolution. (9.30)

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ९-३१ ॥

Such a person soon becomes righteous and attains everlasting peace.
Be aware, O Arjuna, that My devotee never falls down.

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ९-३२ ॥

Anybody, including women, merchants, laborers, and the evil-minded can attain the supreme goal by just surrendering unto My will (with loving devotion), O Arjuna. (9.32)

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ९-३३ ॥

Then, it should be very easy for the holy Braahmanas and devout royal sages (to attain the Supreme state). Therefore, having obtained this joyless and transient human life, one should always remember Me with loving devotion. (9.33)

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ९-३४ ॥
अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥ १०-२० ॥
आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ १०-२१ ॥
वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ १०-२२ ॥

रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ १०-२३ ॥
पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ १०-२४ ॥
महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ १०-२५ ॥
अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ १०-२६ ॥
महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ १०-२५ ॥
अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ १०-२६ ॥
उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ १०-२७ ॥
आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ १०-२८ ॥
अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितृणामर्यमा चास्मि यमः संयमतामहम् ॥ १०-२९ ॥
प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ १०-३० ॥
पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ १०-३१ ॥
सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ १०-३२ ॥
अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥ १०-३३ ॥
मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ १०-३४ ॥
बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ १०-३५ ॥
द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ १०-३६ ॥
वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ १०-३७ ॥
दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।



मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ १०-३८ ॥
यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ १०-३९ ॥

त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥ ११-१८ ॥

I believe You are the imperishable, the Supreme to be realized. You are the ultimate resort of the universe. You are the protector of eternal Dharma, and the imperishable primal spirit. (11.18)

अनादिमध्यान्तमनन्तवीर्यम् अनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ॥ ११-१९ ॥
द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥ ११-२० ॥
अमी हि त्वां सुरसङ्घा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ ११-२१ ॥
रुद्रादित्या वसवो ये च साध्या विश्वे ॥अश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसङ्घा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ ११-२२ ॥
रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥ ११-२३ ॥
नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो ॥ ११-२४ ॥

Seeing Your great effulgent and various-colored form touching the sky; Your mouth wide open and large shining eyes; I am frightened and find neither peace nor courage, O Krishna. (11.24)

दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि ।
दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ॥ ११-२५ ॥

Seeing Your mouths, with fearful teeth, glowing like fires of cosmic dissolution, I lose my sense of direction and find no comfort. Have mercy on me! O Lord of gods, refuge of the universe.

यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ ११-२८ ॥

As many torrents of the rivers rush toward the ocean, similarly, those warriors of the mortal world are entering Your blazing mouths. (11.28)

यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः।
तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः॥ ११-२९॥

As moths rush with great speed into the blazing flame for destruction, similarly all these people are rapidly rushing into Your mouths for destruction. (11.29)

लेलिह्यसे ग्रसमानः समन्ताल्-लोकान्समग्रान्वदनैर्ज्वलद्भिः।
तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो॥ ११-३०॥

You are licking up all the worlds with Your flaming mouths, swallowing them from all sides. Your powerful radiance is burning the entire universe, and filling it with splendor, O Krishna. (11.30)

आख्याहि मे को भवानुग्ररूपोनमोऽस्तु ते देववर प्रसीद।
विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिम्॥ ११-३१॥

Tell me who are You in such a fierce form? My salutations to You, O best of gods, be merciful! I wish to understand You, the primal Being, because I do not know Your mission. (11.31)

श्रीभगवानुवाच।
कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः॥ ११-३२॥

The Supreme Lord said: I am death, the mighty destroyer of the world, out to destroy. Even without your participation all the warriors standing arrayed in the opposing armies shall cease to exist. (11.32)

तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम्।
मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्॥ ११-३३॥

Therefore, you get up and attain glory. Conquer your enemies and enjoy a prosperous kingdom. All these (warriors) have already been destroyed by Me. You are only an instrument, O Arjuna. (11.33)

कस्माच्च ते न नमेरन्महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे।
अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत्॥ ११-३७॥

Why should they not, O great soul, bow to You, the original creator who is even greater than Brahmaa? O infinite Lord, O God of gods, O abode of the universe, You are both Sat and Asat, and the imperishable Brahman that is beyond both (Sat and Asat). (11.37)



त्वमादिदेवः पुरुषः पुराणस्-त्वमस्य विश्वस्य परं निधानम्।
वेत्तासि वेद्यं च परं च धामत्वया ततं विश्वमनन्तरूप॥ ११-३८॥

You are the primal God, the most ancient Person. You are the ultimate resort of all the universe. You are the knower, the object of knowledge, and the supreme abode. The entire universe is pervaded by You, O Lord of the infinite form. (11.38)

वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च।
नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते॥ ११-३९॥

You are Vaayu, Yama, Agni, Varuna, Shashaanka, and Brahmaa as well as the father of Brahmaa. Salutations to You a thousand times, and again and again salutations to You. (11.39)

नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व।
अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः॥ ११-४०॥

My salutations to You from front and from behind. O Lord, my obeisances to You from all sides. You are infinite valor and the boundless might. You pervade everything, and therefore You are everywhere and in everything. (11.40)

यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु।
एकोऽथवाप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम्॥ ११-४२॥

In whatever way I may have insulted You in jokes; while playing, reposing in bed, sitting, or at meals; when alone, or in front of others; O Krishna, I implore You for forgiveness. (11.42)

पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान्।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव॥ ११-४३॥

You are the father of this animate and inanimate world, and the greatest guru to be worshipped. No one is even equal to You in the three worlds; how can there be one greater than You? O Being of Incomparable Glory. (11.43)

तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम्।
पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम्॥ ११-४४ ॥
Therefore, O adorable Lord, I seek Your grace by bowing down and prostrating my body before You. Bear with me as a father to his son, as a friend to a friend, and as a husband to his wife, O Lord. (11.44)

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ११-५५ ॥

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्परः।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ १२-६ ॥
But, to those who worship Me as the personal God, renouncing all actions to Me; setting Me as their supreme goal, and meditating on Me with single minded devotion; (12.06)

तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।
भवामि नचिरात्पार्थ मय्यावेशितचेतसाम्॥ १२-७ ॥
I swiftly become their savior, from the world that is the ocean of death and transmigration, whose thoughts are set on Me, O Arjuna. (12.07)

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः॥ १२-८ ॥
Therefore, focus your mind on Me alone and let your intellect dwell upon Me through meditation and contemplation. Thereafter you shall certainly come to Me. (12.08)

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १३-११ ॥
Steadfastness in knowledge of the Supreme Spirit, and the perception of (the omnipresent God as) the object of true knowledge is called knowledge; what is contrary to this is ignorance. (13.11)

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ १३-१२ ॥
I shall fully describe the object of knowledge, knowing which one attains immortality. The beginningless Supreme Brahman is said to be neither Sat nor Asat. (See also 9.19) (13.12)

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते।
अनादि मत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १३-१३ ॥
Having hands and feet everywhere; having eyes, head, and face everywhere; having ears everywhere; the creator exists in the creation by pervading everything. (13.13)

सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३-१४ ॥
He is the perceiver of all sense objects without the senses; unattached, yet the sustainer of all; devoid of the Gunas, yet the enjoyer of the Gunas. (13.14)

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १३-१५ ॥
He is inside as well as outside all beings, animate and inanimate. He is incomprehensible because of His subtlety. He is very near as well as far away. (13.15)

बहिरन्तश्च भूतानामचरं चरमेव च।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत्॥ १३-१६ ॥
Undivided, yet appears as if divided in beings; He, the object of knowledge, is the creator, sustainer, and destroyer of (all) beings. (13.16)

अविभक्तं च भूतेषु विभक्तमिव च स्थितम्।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १३-१७ ॥
The light of all lights, He is said to be beyond darkness. He is the knowledge, the object of knowledge, and seated in the hearts of all beings, He is to be realized by the knowledge. (13.17)

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम्॥ १३-१८ ॥
Thus the creation as well as the knowledge and the object of knowledge have been briefly described. Understanding this, My devotee attains Me. (13.18)

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ १३-२८ ॥
Seeing the same Lord existing in everybeing, one does not injure the other self and thereupon attains the Supreme goal. (13.28)

समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम्।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम्॥ १३-२९ ॥
Those who perceive that all works are done by the (Gunas of) Prakriti alone, and thus they are not the doer, they truly understand. (See also 3.27, 5.09, and 14.19) (13.29)

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः।
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ १३-३० ॥
When one perceives diverse variety of beings resting in One and spreading out from That alone, then one attains Brahman. (13.30)

यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्॥ १५-१२ ॥
The light that coming from the sun illumines the whole world; and which is in the moon, and in the fire; know that light to be Mine. (See also 13.17 and 15.06) (15.12)

गामाविश्य च भूतानि धारयाम्यहमोजसा।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः॥ १५-१३ ॥
Entering the earth I support all beings with My energy; becoming the sap-giving moon I nourish all the plants. (15.13)

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्॥ १५-१४ ॥
Becoming the digestive fire, I remain in the body of all living beings; uniting with vital breaths, the Prana and Apana, I digest all four varieties of food; and (15.14)

सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्॥ १५-१५ ॥
I am seated in the hearts of all beings. The memory, knowledge, and



the removal of doubts and wrong notions (about the Self) by reasoningor in Samadhicome from Me. I am verily that which is to be known by (the study of) all the Vedas. I am, indeed, the author of the Vedanta and the knower of the Vedas. (15.15)

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया॥ १८-६१ ॥ T
he Lord abides in the heart of all beings, O Arjuna, causing all beings to act (or work out their Karma) by His power of Maya as if they are (puppets of Karma) mounted on a machine. (18.61)

तमेव शरणं गच्छ सर्वभावेन भारत।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥ १८-६२ ॥
Seek refuge in Him alone with all your heart, O Arjuna. By His grace you shall attain supreme peace and the eternal abode. (18.62)

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे॥ १८-६५ ॥ Fix your mind on Me, be devoted to Me, offer service to Me, bow
down to Me, and you shall certainly reach Me. I promise you because you are very dear to Me. (18.65)

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥ १८-६६ ॥
Setting aside all noble deeds, just surrender completely to the will of God (with firm faith and loving contemplation). I shall liberate you from all sins (or bonds of Karma). Do not grieve. (18.66)

इदं ते नातपस्काय नाभक्ताय कदाचन।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति॥ १८-६७ ॥
This (knowledge) should never be spoken by you to one who is devoid of austerity, who is without devotion, who does not desire to listen, or who speaks ill of Me. (18.67)

गोस्वामी तुलसीदास् विरचित श्रीरामचरितमानस् के कुछ अंश

बालकाण्ड राम जन्म भये प्रगट् कृपाला दीनदयाला कौसल्या हितकारी।
हर्षित् महतारी मुनि मन् हारी अद्भुत् रूप् बिचारी॥
लोचन् अभिरामा तनु घनस्यामा निज् आयुध् भुज् चारी।
भूषन् वनमाला नयन् बिसाला सोभासिन्धु खरारी॥
कह् दु कर् जोरी अस्तुति तोरी केहि बिधि करौं अनंता।
माया गुन् ग्यानातीत् अमाना वेद् पुरान् भनंता॥
करुना सुख् सागर् सब् गुन् आगर् जेहि गावहिं श्रुति संता।
सो मम् हित् लागी जन् अनुरागी भयउ प्रकट् श्रीकंता॥
ब्रह्मांड् निकाया निर्मित् माया रोम् रोम् प्रति बेद् कहै।
मम् उर् सो बासी यह् उपहासी सुनत् धीर् मति थिर् न् रहै॥
उपजा जब् ग्याना प्रभु मुसुकाना चरित् बहुत् बिधि कीन्ह् चहै।
कहि कथा सुहा मातु बुझा जेहि प्रकार् सुत् प्रेम् लहै॥
माता पुनि बोली सो मति डोली तजहु तात् यह् रूपा।
कीजे सिसुलीला अति प्रियसीला यह् सुख् परम् अनूपा॥
सुनि बचन् सुजाना रोदन् ठाना हो बालक् सुरभूपा।
यह् चरित् जे गावहि हरिपद् पावहि ते न् परहिं भवकूपा॥
बिप्र धेनु सुर् संत् हित् लीन्ह् मनुज् अवतार्।
निज् इच्छा निर्मित् तनु माया गुन् गो पार्॥

अरण्यकाण्ड अत्रि मुनि द्वारा स्तुति
नमामि भक्त वत्सलं। कृपालु शील कोमलं॥
भजामि ते पदांबुजं। अकामिनां स्वधामदं॥
निकाम श्याम् सुंदरं। भवाम्बुनाथ् मंदरं॥
प्रफुल्ल कंज लोचनं। मदादि दोष् मोचनं॥
प्रलंब बाहु विक्रमं। प्रभोऽप्रमेय वैभवं॥
निषंग चाप सायकं। धरं त्रिलोक नायकं॥
दिनेश वंश मंदनं। महेश चाप खंदनं॥
मुनींद्र संत रंजनं। सुरारि वृन्द भंजनं॥
मनोज वैरि वंदितं। अजादि देव सेवितं॥
विशुद्ध बोध विग्रहं। समस्त दूषणापहं॥
नमामि इंदिरा पतिं। सुखाकरं सतां गतिं॥
भजे सशक्ति सानुजं। शची पति प्रियानुजं॥
त्वदंघ्रि मूल ये नराः। भजंति हीन मत्सराः॥
पतंति नो भवार्णवे। वितर्क वीचि संकुले॥
विविक्त वासिनः सदा। भजंति मुक्तये मुदा॥
निरस्य इंद्रियादिकं। प्रयांति ते गतिं स्वकं॥
तमेकमद्भुतं प्रभुं। निरीहमीश्वरं विभुं॥
जगद्गुरुं च शाश्वतं। तुरीयमेव केवलं॥
भजामि भाव वल्लभं। कुयोगिनां सुदुर्लभं॥



स्वभक्त कल्प पादपं। समं सुसेव्यमन्वहं॥
अनूप रूप भूपतिं। नतोऽहमुर्विजा पतिं॥
प्रसीद मे नमामि ते। पदाब्ज भक्ति देहि मे॥
पठंति ये स्तवं इदं। नरादरेण ते पदं॥
व्रजंति नात्र संशयं। त्वदीय भक्ति संयुताः॥

अरण्यकाण्ड मुनि सुतीक्ष्ण द्वारा स्तुति
कह मुनि प्रभु सुन बिनती मोरी। अस्तुति करौं कवन बिधि तोरी॥
महिमा अमित मोरि मति थोरी। रबि सन्मुख खद्योत अँजोरी॥
श्याम तामरस दाम शरीरं। जटा मुकुट परिधन मुनिचीरं॥
पाणि चाप शर कति तुणीरं। नौमि निरंतर श्री रघुवीरं॥
मोह विपिन घन दहन कृशानुः। संत सरोरुह कानन भानुः॥
निशिचर करि बरूथ मृगराजः॥ त्रातु सदा नो भव खग बाजः॥
अरुण नयन रजीव सुवेशं। सिता नयन चकोर निशेशं।
हर हृदि मानस बाल मरालं। नौमि राम उर बाहु विशालं॥
संसय सर्प ग्रसन उरगादः। शमन सुकर्कश तर्क विषदः॥
भव भंजन रंजन सुर यूथः। त्रातु नाथ नो कृपा वरूथः॥
निर्गुण सगुण विषम सम रूपं। ग्यान गिरा गोतीतमनूपं॥
अमलम् अखिलम् अनवद्यम् अपारं। नौमि राम भंजन महि भारं॥
भक्त कल्प पादप आरामः। तर्जन क्रोध लोभ मद कामः॥
अति नागर भव सागर सेतुः। त्रातु सदा दिनकर कुल केतुः॥
अतुलित भुज प्रताप बल धामः। कलि मल विपुल विभंजन नामः॥
धर्म वर्म नर्मद गुण ग्रामः। संतत शं तनोतु मम रामः॥
जदपि बिरज व्यापक अबिनासी। सब के हृदयँ निरंतर बासी॥
तदपि अनुज श्री सहित खरारी। बसतु मनसि सम काननचारी॥
जे जानहिं ते जानहुँ स्वामी। सगुन अगुन उर अंतरजामी॥
जो कोसलपति राजिव नयना। करौ सो राम हृदय मम अयना॥
अस अभिमान जा जनि भोरे। मैं सेवक रघुपति पति मोरे।

उत्तरकाण्ड श्रीराम के राज्याभिषेक के पश्चात् स्तुति

जय राम रमारमनं शमनं। भव ताप भयाकुल पाहि जनं॥
अवधेश सुरेश रमेश विभो। शरणागत माँगत पाहि प्रभो॥
दससीश विनाशन् बीस् भुजा। कृत दूरि महा महि भूरि रुजा॥
रजनीचर बृंद पत।ग रहे। सर पावक् तेज प्रचंड दहे॥
महि मंदल मंदन चारुतरं। धृत सायक चाप निषंग बरं॥
मद मोह महा ममता रजनी। तम पुंज दिवाकर तेज अनी॥
मनजात किरात निपात किये। मृग लोग कुभोग सरेन हिये॥
हति नाथ अनाथनि पाहि हरे। विषया बन पाँवर भूलि परे॥
बहु रोग बियोगिन्हि लोग हये। भवदंघ्रि निरादर के फल ए॥
भव सिंधु अगाध परे नर ते। पद पंकज प्रेम न जे करते॥

अति दीन मलीन दुखी नितहीं। जिन्ह कें पद पंकज प्रीत नहीं॥
अवलंब भवंत कथा जिन्ह कें। प्रिय संत अनंत सदा तिन्ह कें॥
नहिं राग न लोभ न मान मदा। तिन्ह कें सम बैभव वा बिपदा॥
एहि ते तव सेवक होत मुदा। मुनि त्यागत जोग भरोस सदा॥
करि प्रेम निरंतर नेम लियें। पद पंकज सेवत शुद्ध हियें॥
सम मानि निरादर आदरही। सब संत सुखी बिचरंति मही॥
मुनि मानस पंकज भृंग भजे। रघुवीर महा रनधीर अजे॥
तव नाम जपामि नमामि हरी। भव रोग महागद मान अरी॥
गुन सील कृपा परमायतनं। प्रनमामि निरंतर श्रीरमनं॥
रघुनंद निकंदय द्वंद्व घनं। महिपाल बिलोकय दीन जनं॥
बार बार बर मागउँ हरषि देहु श्रीरंग।
पद सरोज अनपायनी भगति सदा सतसंग॥

श्रीरामचन्द्र कृपालु भजु मनहरण भवभय दारुणम्।
नवकञ्ज लोचन कञ्ज मुखकर कञ्जपद कञ्जरुणम्॥ १॥
कंदर्प अगणित अमित छबि नव नील नीरज सुन्दरम्।
पटपीत पानहुँ तड़ित रुचि सुचि नौमि जनक सुतावरम्॥ २॥
भजु दीन बन्धु दिनेश दानव दैत्यवंशनिकन्दनम्।
रघुनन्द आनंदकंद कोशल चन्द दशरथ नन्दनम्॥ ३॥
सिरक्रीट कुण्डल तिलक चारु उदार अङ्ग विभूषणम्।
आजानुभुज सर चापधर सङ्ग्राम जित खरदूषणम्॥ ४॥
इति वदति तुलसीदास शङ्कर शेष मुनि मनरञ्जनम्।
मम हृदयकञ्ज निवास कुरु कामादिखलदलमञ्जनम्॥ ५॥
मन जाहि राचो मिलहि सोवर सहजसुन्दर सांवरो।
करुणानिधान सुजान शील सनेह जानत रावरो। ६॥
एहि भाँति गौरि अशीस सुनि सिय सहित हिय हर्षित अली।
तुलसी भवानिहिं पूजि पुनि पुनि मुदित मन मन्दिर चली॥ ७॥
जानि गौरि अनुकूल सिय हिय हर्षनः जात कहि।
मञ्जुल मङ्गल मूल वाम अङ्ग परकन लगे॥
सियावर रामचन्द्र पद गहि रहुँ।उमावर शम्भुनाथ पद गहि रहुँ।
महाविर बजरँगी पद गहि रहुँ। शरणा गतो हरि॥



शान्ति-पाठ

ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवाशिष्यते॥
ईशावास्योपनिषद्

ॐ आप्यायन्तु ममाङ्गानि वाक् प्राण श्चक्षुः श्रोत्रमथो बलभिन्द्रियाणि च सर्वाणि। सर्वं ब्रह्मौपनिषदं माहं ब्रह्म निराकुर्या मा मा ब्रह्म निराकरोत, अनिलाकरणमस्त्वनिराकरण मेऽस्तु। तदात्मनि निरते य उपनिषत्सु धर्मास्ते मायि सन्तु ते मयि सन्तु। - केनोपनिषद
मेरे अंग, वाणी, प्राण, नेत्र, कान, सब इन्द्रियां तथा बल परिपुष्ट हों उपनिषदों में वर्णित ब्रह्म के स्वरूप को मैं अस्वीकार न करूं, ब्रह्म भी मेरा परित्याग न करें। मेरे साथ ब्रह्म का, और ब्रह्म के साथ मेरा अटूट संबंध बना रहे। उपनिषदों में वर्णित धर्म परमात्मायें निरन्तर लगे हुये मुझमें प्रकाशित रहें।

ॐ सहनाववतु। सह नौ भुनक्तु। सह वीर्य करवावहै। तेजस्ति नावधीतमस्तु। मा विद्विषावहै। - कठोपनिषद्
ॐ भद्र कर्णेभिः श्रृणुयाम देवाः भद्रं पश्येमाक्षामिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवा, सस्तनूभिर्व्यशेम देवहितं यदायुः॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा वि श्ववेदाः।
स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥ - प्रश्नोपनिषद्
हम अपने कानों से कल्याणकारी वचन सुनें, नेत्रों से कल्याण का दर्शन करें, सुदृढ़ अंग व शरीर से भगवान की स्तुति करते हुये परमात्मा के काम आ सकें। सब ओर फैले हुये इन्द्र हमारे लिए कल्याण का पोषण करें। म्पूर्ण वि‍श्वका ज्ञान रखने वाले पूषा हमारे लिए कल्याण का पोषण करें। अरिष्टों को मिलने वाले गरुड़ हमारे लिए कल्याण का पोषण करें। (बुद्धि के स्वामी) बृहस्पति हमारे लिए कल्याण की पुष्टि करें।

ॐ शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं नो इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्धक्तरमवतु। अवतु माम्। अवतु वक्तारं ॐ शान्तिःशान्तिःशान्तिः -तैत्तिरीयोपनिषद्

ॐ वाङ् में मनसि प्रतिष्ठिता मनो में वाचि प्रतिष्ठितमाविरावीर्म एधि। वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीः। अनेनाधीतेनाहोरात्रान्सन्दधाम्यृतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तरमवतु। अवतु मामवतु वक्तारमवतु वक्तारम्॥ -ऐतरेयोपनिषद्
मेरा मन वाणी में स्थित हो जाय, मेरी वाणी मन में स्थित हो जाय। हे आविः (प्रकाशस्वरूप परमेश्वर) तुम मेरे लिए प्रकट हो (आवी एधि)। वेदविषयक ज्ञान को लाने वाले बनो। (मेश्रतम् मा प्रहासीः) मेरा सुना हुआ ज्ञान मुझे न छोड़े। इस अध्ययन के द्वारा मैं दिन और रात एक कर दूं।
श्रेष्ठ शब्द बोलूंगा। सत्य बोलूंगा। वह (तत्) ब्रह्म मेरी (माम) रक्षा करे (अवतु)। वह वक्ता (आचार्य) की रक्षा करे।

यो देवो अग्नौ यो अप्सु यो विश्व भुवनमामिवेश।
य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमो नमः॥
जो परमात्मा अग्नि में है, जल में है, समस्त जीवों में प्रविष्ट हो रहा है।